गदाधरभट्टाचार्यविरचितः



# व्युत्पत्तिवादः

महामहोपाध्यायजयदेवमिश्रविरचितया

जयाख्यव्याख्यया

सहितः

प्रयागविश्वविद्यालयप्राच्यदर्शनाध्यापकेन राजकीयमिथिला-

संस्कृतविद्यापीठाध्यक्षेण

एम्० ए०, डी० लिट्०, काव्यतीर्थोपाधिभाजा

महामहोपाध्यायेन श्रीमदुमेशमिश्रेण स्वटिप्पण्यादिना संशोध्य

प्रकाशितः

१९५३

## प्राक्कथनम्

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति न्यायसूत्रमवलम्ब्य मिथिलालङ्कारभूतेन नव्यन्यायशास्त्रस्यादिकर्त्रा गङ्गेशोपाध्यायेन तत्त्वचिन्तामणिनामको ग्रन्थो विरचितः। तत्र क्रमशः प्रत्यक्षादिप्रमाणचतुष्टयविचारात्मकं खण्डचतुष्टयं वर्त्तते। शब्दखण्डस्तस्यैव ग्रन्थस्यान्तिमो भागः। खण्डेऽस्मिन् न केवलं नैयायिकानामपि तु मीमांसकानां वैयाकरणानाञ्च मतेन शब्दतत्त्वस्य विशेषेण निरूपणं वर्त्तते। नैयायिकमीमांसकवैयाकरणानां त्रयाणामपि समानोऽधिकारः शब्दखण्डे। अतोऽर्वाचीनैः नैयायिकादिभिः सर्वैः शब्दतत्त्वविचारे ग्रन्थरचनाद्वारा पृथक् पृथक् विचारः प्रदर्शितः।

शब्दतत्त्वविचारे प्रकृतिप्रत्ययभेदेन भागद्वयं वर्त्तते। तत्र प्रकृत्यर्थस्यालोचनं शक्तिवादे गदाधरभट्टाचार्येण कृतम्। प्रत्ययविचारादृते शब्दतत्त्वविचारोऽपूर्ण एवेति मत्वा प्रधानतया न्यायमतमवलम्ब्य नैयायिकप्रवरैः गदाधरभट्टाचार्यैर्व्युत्पत्तिवादनामको ग्रन्थः प्रणीतः। ग्रन्थोऽयं विषयोत्कृष्टतया सुस्पष्टलेखप्रणाल्या च सर्वैः शास्त्ररसिकैर्विशेषतयादृतः। नैयायिकैर्वैयाकरणैश्च विशेषेण पठ्यते।

प्रत्ययार्थनिरूपणपरोऽयं ग्रन्थो व्युत्पत्तिविधायकशास्त्रे शिरोमुकुटायमाणः कस्य विपश्चितश्चेतसि मुदं नावहति। व्याकरणे न्याये वाऽस्याध्ययनं विना प्रकर्षपाण्डित्यं नैव लभ्यते। अतो महानादरोऽस्य ग्रन्थस्य पण्डितसमाजे। परन्तु गूढार्थोऽयं ग्रन्थः। सर्वतोभावेनाभिप्रायोद्घाटने न सर्वे समर्थाः। 'जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः' इत्यादिश्रीमदुदयनाचार्यकथनानुसारेण पाण्डित्यसम्पादकग्रन्थानामध्ययनाध्यापनादिक्रमोपि क्रमशो ह्रासपथमेवानुसरति। अत एवेदृशस्य ग्रन्थस्य सरला सुस्पष्टतरा टीकाप्यपेक्षिता। तत्रापि सन्ति कृष्णभट्टीयगूढार्थादर्शादयो विविधा

व्याख्याः किन्तु आधुनिकविद्यार्थिनां कृते न ताः सर्वथोपयोगिन्यः । इति मनसि निधाय महामहोपाध्यायमिथिलालङ्कारभूतसन्मिश्रजयदेवशर्म्मभिः जयाख्या सरलातिमनोहरैका व्याख्या व्यरचि । इयं विद्यार्थिनां महदुपयोगिनीत्यस्याः शीघ्रमेव पुनः संस्करणेनैव स्पष्टम् ।

यद्यपि शास्त्ररसिकानां दौर्भाग्यवशात्तातचरणाः प्रथमाविवरणे भेदान्वयविचारे 'प्रत्ययत्वाद्यनुपस्थितिदशायां' ( पृ० ११७ ) इति ग्रन्थपर्यन्तस्यैव टीकां विरचयन्त एव सन्निपातज्वराभिभूताः काशीविश्वेश्वरसायुज्यं प्राप्तवन्तस्तथाऽपि विद्यार्थिनामुपकाराय बहुस्थलेषु द्वितीयाविवरणादिष्वपि तातपादानां टिप्पण्यादितो ग्रन्थानुद्धृत्य द्वितीयाविवरणपर्यन्तो ग्रन्थभागो जयासहितः पूर्वं प्रकाशितः । प्रायशो विविधप्रान्तीयपरीक्षासु द्वितीयापर्यन्त एव ग्रन्थः पाठ्यरूपेण निर्द्धारितोऽस्ति । अत एव बहुधा परीक्षार्थिभिर्द्वितीयाविवरणं यावदेव ग्रन्थः पठ्यते । परन्तु विशेषज्ञानलाभायाग्रतनोऽपि ग्रन्थोऽवश्यमेव पठनीयस्तत्सम्पादनाय तथा समस्तग्रन्थरक्षणाय चावशिष्टोऽप्यंश आख्यातविवरणपर्यन्तोऽद्य प्रेक्षावतां पुरतः प्रकाश्य विषयवैशद्यार्थं केषुचित्स्थलेषु स्वटिप्पण्यादिभिः समलङ्कृत्य संस्थाप्यते ।

ग्रन्थकर्त्तुष्टीकाकर्त्तुश्च संक्षिप्तोऽपि परिचयो ज्ञेयः । तत्र तावद् गदाधरभट्टाचार्यो जीयाचार्यपुत्रः वङ्गदेशीयवारेन्द्रब्राह्मणकुलोत्पन्नः पवनामण्डलान्तर्गतपद्मीपाशनामकस्थानं स्वजन्मनाऽलञ्चकारेति विदुषां परामर्शः । प्राप्तवयस्को न्यायशास्त्रे विशेषवैदुष्यसम्पादनाय गदाधरस्तार्किकशिरोमणिहरिरामतर्कवागीशसकाशमध्येतुं नवद्वीपमाजगाम । तत्राचिरेणैव कालेन तर्कवागीशमहाशयाः पञ्चत्वं प्राप्तवन्तः । गदाधरस्तु तत्स्थानापन्नोऽध्यापको बभूव ।

परन्तु नायं गदाधरो विद्योपाधिभिरलङ्कृतो हरिरामतर्कवागीशस्थानयोग्यः पण्डितश्चेति मत्वा पूर्वं न कोऽपि गदाधरादध्येतुमाजगाम । अनादरेणानेन गदाधरस्तु हतोत्साहो न जातः । परं पण्डितसमाजे स्वपाण्डित्यपरिचयप्रदानायोपायान्तरस्य शरणमवलम्बितवान् । आदौ पूर्वविद्यालय-

स्थानं परित्यज्य राजमार्गसमीपस्थायां कस्याञ्चिद्वाटिकायां तेन स्वनिवासः कृतः। ततो विद्यार्थिनामभावे तत्रैवोपवने लतापर्णवृक्षादीनुद्दिश्योच्चैः गूढस्थलशास्त्रविचारमालोचयन् बहून् दिवसाननैषीत्। राजमार्गेण गच्छद्भिर्विद्यार्थिभिः पण्डितैश्च सकुतूहलं प्रच्छन्नरूपेणोदासीनभावेन वा गदाधरस्य शास्त्रीयविचारं श्रुत्वा तस्य विशिष्टवैदुष्यपरिचयो लब्धः। ततः क्रमशस्तद्योग्यताविषयसन्देहरहिता विद्यार्थिनस्तत्समीपमध्येतुमाजग्मुः। इत्येवं क्रमेणाल्पेनैव कालेन महता प्रयत्नेन गदाधरस्य पाण्डित्यख्यातिः सर्वत्र प्रथिता। इत्येवं नवद्वीपमहिमानामकग्रन्थतो ज्ञायते।

एवं शतशश्छात्रानध्यापयन्तो गदाधरभट्टाचार्या विविधान् ग्रन्थानपि प्रणिन्युः। तद्यथा—(१) न्यायकुसुमाञ्जलिटीका, (२) तत्त्वचिन्तामण्यालोकटीका, (३) आत्मतत्त्वविवेकदीधितिटीका, (४) तत्त्वचिन्तामणिदीधितिप्रकाशिका, (५) मुक्तावलीटीका, (६) दुर्गासप्तशतीटीका, (७) ब्रह्मनिर्णयः, तथा (८) चतुःषष्टि वादार्थाः। तत्र केचन—विषयतावादः, शक्तिवादः, व्युत्पत्तिवादः, मुक्तिवादः, सादृश्यवादः, रत्नकोशवादः, कारणतावादः, अनुमितिमानसवादः, नव्यमतवादः, विधिस्वरूपवादः, आख्यातवादः, कारकवादः, नञ्वादः, बुद्धिवादः, स्मृतिसंस्कारवादः, इत्यादयः।

अनेन रचिताष्टीकाः प्रायशो गादाधरीति नाम्ना लोके प्रसिद्धाः। शक्तिवादटीकाकारो जयरामोऽस्य प्रधानः शिष्यः। गदाधरस्याविर्भावकालः पञ्चाशदुत्तरषड्शताधिकैकसहस्रमितः ( १६५० ) ख्रीस्ताब्दः इति कथ्यते।

जयाटीकाकर्त्तुर्जीवनचरितविषये तदन्यतमशिष्यप्रवरेण महामहोपाध्यायेन (सर) श्रीगङ्गानाथझामहाशयेन तदानीं प्रयागविश्वविद्यालयकुलपतिना यल्लिखितं* तदेवात्र प्रकाश्यते।

---

*एतत्पूर्वमेव सुप्रभातमितिनामकसंस्कृतपत्रिकायां प्रकाशितमासीत्।

अस्ति मिथिलायां 'गजहड़ा' इति नाम्ना प्रसिद्धो ग्रामः। तत्रैव सुप्रतिष्ठिते सोदरपुरमैथिलब्राह्मणकुले प्रातःस्मरणीया महामहोपाध्यायाः श्री ६ जयदेवमिश्रशर्माणः रुद्र-रत्न-भू-परिमिते ( १९११ ) वैक्रमीये संवत्सरे कार्तिकशुक्लपूर्णिमायां जन्म लेभिरे। सम्पादितद्विजोचितसंस्काराश्च हरिनगर-ग्रामे सुप्रसिद्धविद्वद्वर-हलधर-(प्रसिद्ध 'हल्ली')शर्मणः सकाशात् वर्षद्वयं यावत् व्याकरणशास्त्रस्याद्यमंशमधीत्य तत्र आर्थिकक्लेशं प्राप्य तत्स्थानमुज्झित्वा गन्धवारिनगरे लेखकस्य मातामह्या पुण्यशीलया श्री ३ वसुमतीदेव्या संस्थापिते विद्यालये महामहोपाध्यायश्री६रजेमिश्रशर्मभिरिदानीमपि मिथिलां मण्डयद्भिरधिष्ठिते तेभ्य एव शब्देन्दुशेखरादिग्रन्थान् स्वायत्तीचक्रुः, समाप्नुवंश्च तदानीमेव पण्डितमण्डलीषु प्रौढविद्वत्ताप्रतिष्ठाम्। गुणाग्नि-ग्रह-भू-(१९३३)-मिते च वर्षे काशीमागत्य विश्वविख्यातानां श्री६मतां बालशास्त्रिणां सकाशे, तदनन्तरञ्च सकलतन्त्रापरतन्त्राणा म० म० श्री ६ शिवकुमारमिश्रशर्म्मणां सकाशे व्याकरणशास्त्रमधीतमपि परिमार्ज्य शास्त्रान्तराण्यपि समग्राण्यधिगतवन्तः। युवावस्थायामेव काशीस्थविद्वज्जनेषु लब्धवैदुष्यप्रतिष्ठो वस्वग्नि-रत्न-चन्द्र-(१९३८) मिते संवत्सरे मिथिलाधीशेन पवित्रकीर्तिना महाराजश्री ५ लक्ष्मीश्वरसिंहमहोदयेन संस्थापितायां दरभङ्गापाठशालायां काशीस्थायां श्रीशिवकुमारमिश्र—श्रीरामकृष्ण(तात्या)शास्त्रि—श्रीसुधाकरद्विवेद—श्रीदुःखभञ्जनकविभिः पण्डितरत्नैः सह व्याकरणाध्यापकासनं शोभयामासुः, समभूषयंश्च तदासनं वेदर्षिरत्न-भू-(१९७४) मितवर्षपर्य्यन्तम्। तदनन्तरं हिन्दूविश्वविद्यालयाध्यक्षास्तान् प्राच्यविद्याविभागे प्रधानाध्यापकपदव्यां समावेशयन्। तदारभ्याजीवं तदेव स्थानं श्रीमद्भिरलङ्कृतमभूत्। एवञ्च प्रायशः षट्चत्वारिंशद्वर्षाणि नानाशास्त्राण्यध्यापयतामेषां व्यतीतानि। समासादिताश्च पाण्डित्यपदवीं सहस्रशश्छात्राः। तेष्वेवैकोऽयं लेखकोऽपि स्वभाग्यवशादासीत्। पण्डितवर्याणां कीदृशं पाण्डित्यमासीदिति तेषां छात्रेण वर्णनमनुचितमेव प्रतिभाति। अस्त्वेतदेव पर्याप्तं यत् प्रायशो

गणितशास्त्रवर्जं सर्वेष्वपि शास्त्रेषु तेषामधिकारः पूर्णतयाऽऽसीत् । शास्त्र-विचारस्य तु सार एवैतेष्वेकत्रीकृत आसीत् । रत्नशशिरत्नभू (१९१९) मिते च ईशवीये भारतसम्राट् पण्डितसम्राड्भ्य एभ्यो महामहोपाध्यायपदवीं वितीर्यास्याः पदव्याः प्रतिष्ठां वर्धयामासुः । महात्मनामेतेषां स्मारकास्त-न्निर्मिता ग्रन्थाः—(१) परिभाषेन्दुशेखरस्य टीका विजया ( मुद्रिता )—(२) शास्त्रार्थरत्नावली (मुद्रिता)—(३) व्युत्पत्तिवादस्य टीका जया (मुद्र्यमाणा)—(४) शब्देन्दुशेखरस्य टीका (अपूर्णा)—(५) महा-विनायकस्थापनपद्धतिः—(६) वास्तुपद्धतिः—(७) शतचण्डीपद्धतिः—(८) कुलदेवतास्थापनपद्धतिः—(९) नीलवृषोत्सर्गपद्धतिः—(१०) तुला-दानपद्धतिश्चेति। पुत्रत्रयं कन्यकाद्वयं चेति । पुत्रेषु ज्येष्ठः श्रीमान् उमेशमिश्रः काव्यतीर्थः 'एम्० ए०,' (डी० लिट्०, महामहोपाध्याय) उपाधिभाक् प्रयागविश्वविद्यालये संस्कृताध्यापकपदमलङ्करोति (तृतीयसंस्करणावसरे राजकीयमिथिलासंस्कृविद्यापीठाध्यक्षोपि अस्ति) मध्यमः श्रीरमेशो गृह-कार्य्यं करोति; तृतीयः श्रीश्रीकृष्णः सम्पादितसंस्कारोऽधुना बाल्यावस्थायामेव (एम्० ए०, मिथिलाकालेजाध्यापकश्चाधुना) वर्तते । एवञ्चैहिकसमस्तस-म्पदनुमापितप्राक्तनपुण्यराशयो नित्यसदनुष्ठानप्रत्यक्षीकृतब्राह्मण्याः पूज्यपादाः सर्वथा सनातनधर्मावलम्बिनामादर्शा इवासन् ।

अशेषविद्वज्जनदौर्भाग्ये वर्षेऽस्मिन् कर्णाभ्यन्तरव्रणमूलकसन्निपातज्व-रेणाक्रान्ताः । तत्रापि ज्वरप्रलापेषु शास्त्रीयाण्येव वाक्यान्युच्चेरुः । मरणात् प्राक् चत्वारि दिनानि मणिकर्णिकायां चक्रपुष्करणीतीर्थगङ्गा-प्रवाहयोर्मध्ये स्थित्वा—"उत्क्षिप्य बाहू त्वसकृद्ब्रवीमि, त्रयीमयेऽस्मिंस्त्रय-मेव सारम् । विश्वेशलिङ्गम्मणिकर्णिकाम्बु, काशीपुरी सत्यमिदं त्रिसत्य"-मिति पद्यमुच्चैर्घोषयन्तो मध्याह्नसमये मणिकर्णिकागङ्गाजले निमग्नार्ध-शरीराः १९८२ वैक्रमे फाल्गुनशुक्लसप्तम्यां विश्वेश्वरसायुज्यमगमन् ।

शून्यमधुना पण्डितमण्डलम्भारते, शास्त्रार्थचर्चा त्वस्तप्रायैव । शोक-सन्तप्तेनाधिकं वर्णयितुन्न पार्यते । समाश्वासनस्थानमेतावदेव यदधिक-

क्लेशं विनैव पठनपाठनादिकार्य्यं कुर्वाणा एव यथा सर्वत्र जीवने प्रौढा आसंस्तथैवामरणन्निरवाहयन् । ज्वराक्रान्तदिनपर्य्यन्तं व्युत्पत्तिवादटीकारचनायां लग्ना आसन् । अत एवोक्तम्—

जयः कुले जयोऽभ्यासे जयः पण्डितमण्डले ।
जयो मृत्यौ जयो मोक्षे 'जयदेवः' सदा जयः ॥"

इति

'तीरभुक्ति'
प्रयाग
आश्विनकृष्णसप्तम्यां चन्द्रे
१६६७ वैक्रमाब्दे

विदुषामनुचरः
श्रीमदुमेशमिश्रः

## तृतीयसंस्करणस्य प्राक्कथनम्

संस्कृतविद्याध्ययने क्रमिकह्रासस्तु स्पष्ट एव विलोक्यते । तत्रापि विशिष्टवैदुष्यसाधनग्रन्थानामध्ययनं तु विरला एव तत्त्वजिज्ञासवः कुर्वन्ति । एवं स्थिते अद्य पुनर्महानस्माकं हर्षो यदस्य सटीकग्रन्थस्य तृतीयसंस्करणं विदुषां पुरतः प्रकाश्य संस्थाप्यते । इदन्तु सर्वदा सर्वथाऽवगन्तव्यं यत् कालवशात् व्यवहारे कदाचित् ह्रासः पश्चादुन्नतिर्भवतु किन्तु तत्त्वं तु न कदाचित् विनश्यति । सत्यमेवोक्तं भगवता—'नासतो विद्यते भावो नाभावो विद्यते सतः' । अत एव तत्त्वरक्षणे तत्सम्पादनाय च यत्नो विधेयः ।

अधिक वैशाखकृष्णपञ्चम्यां चन्द्रे
प्रयाग
२०१० वै० सं०

विदुषां वशंवदः
श्रीमदुमेशशर्म्ममिश्रः



महामहोपाध्याय-पण्डितराज-जयदेवशर्म्ममिश्राः
( जीवनकालः १९११–८३ वैक्रमाब्द )

|| श्रीगणेशाय नमः ||

# अथ व्युत्पत्तिवादः

शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया

---

श्रीदुर्गामाधवगणेशाः पान्तु

गदाधरं श्रीगिरिजां गणेशं प्रणम्य विश्वेश्वरपादपद्मम् ।
शिष्यप्रियश्रीजयदेवमिश्रो व्युत्पत्तिवादस्य तनोति टीकाम् ॥ १ ॥
सन्त्यस्य टीका विविधास्तथाऽपि परिश्रमो निष्फलतां न यायात् ।
द्राक्षाफले सत्यपि किं रसज्ञैर्नास्वाद्यते ह्यप्यरसो रसालः ॥ २ ॥

घटादिपदात् पटादिविषयकशाब्दबोधवारणाय तत्पदजन्यतद्विषयकं शाब्दबोधं प्रति तत्पदजन्यतद्विषयकोपस्थितिः कारणं वाच्यम् । घटपदात् पटोपस्थितेरभावान्न तद्विषयकशाब्दबोधः । घटपदादेः समवायसम्बन्धेन सम्बन्ध्याकाशविषयकोपस्थितिबलादाकाशविषयकशाब्दबोधवारणाय तत्पदजन्यशाब्दबोधे तत्पदनिष्ठवृत्तिज्ञानाधीनतद्विषयकोपस्थितिः कारणम् । आकाशोपस्थितेर्वृत्तिज्ञानजन्यत्वाभावान्न शाब्दबोधजनकत्वम् । नीलो घट इत्यादावभेदादेर्घटादिपदनिष्ठवृत्तिज्ञानाधीनोपस्थित्यभावेन शाब्दबोधस्य च सत्त्वेन व्यभिचारः स्यादित्यभेदादावपि घटादिपदस्य शक्तिरुपेयतेऽन्विताभिधानवादिभिः । तथा चाभेदादेः पदार्थद्वयसंसर्गस्यापि वृत्तिज्ञानाधीनोपस्थितेस्सत्त्वान्न व्यभिचारः । परन्त्वेतादृशकार्यकारणभावेऽपि घटादिपदात् घटविशेष्यकघटत्वप्रकारकस्येव घटप्रकारकघटत्वविशेष्यकशाब्दबो-

धस्यापि बाधकाभावादापत्त्या तत्पदजन्यतत्प्रकारकतद्विशेष्यकशाब्दबोधं प्रति तत्पदनिष्ठवृत्तिज्ञानाधीनतत्प्रकारकतद्विशेष्यकोपस्थितिः कारणं वाच्यं, तथा च घटादिपदात् घटप्रकारकघटत्वविशेष्यकोपस्थितेरभावान्न तादृशशाब्दबोधापत्तिः। इत्थञ्च पदार्थद्वयसंसर्गनिष्ठशाब्दबोधीयविषयता किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतानात्मकतया तादृशसंसर्गस्य वृत्तिज्ञानाधीनोपस्थित्यभावेऽपि व्यभिचाराप्रसक्त्या तत्र पदानां वृत्तिकल्पनमयुक्तमेवेति नैयायिकाः। परन्त्वेतेषां मते पदार्थद्वयसंसर्गभाननियामकाभावेन सर्वत्राबाधितसकलसंसर्गभानसम्भवेन नीलो घट इत्यादावभेदादेरिव स्वस्वामिभावादेरपि भानापत्तिरिति शङ्कानिराशाय स्वमते नियामकमुच्यते- शाब्दबोधे चैत्यादिना। चशब्दस्त्वर्थे संसर्गपदानन्तरं स बोध्यः। एकपदार्थ इत्यत्रानुयोगिता सप्तम्यर्थः। तत्र वृत्तित्वसम्बन्धेन प्रकृत्यर्थस्यान्वयः। तस्याश्च निरूपकत्वसम्बन्धेन संसर्गपदार्थेऽन्वयः। अपरपदार्थस्य वृत्तित्वसम्बन्धेन षष्ठ्यर्थप्रतियोगित्वे तस्य च निरूपकत्वसम्बन्धेन संसर्गपदार्थेऽन्वयः। शाब्दबोध इत्यत्र निरूपितत्वं सप्तम्यर्थः। तेनैव सम्बन्धेन शाब्दबोधस्य भासधात्वर्थविषयतायामन्वयः। तस्यामेव निरूपितत्वसम्बन्धेन संसर्गमर्य्यादार्थाऽऽकाङ्क्षान्वयितृतीयार्थप्रयोज्यत्वस्य स्वरूपसम्बन्धेनान्वयः। तस्याश्चाख्यातार्थाश्रयत्वे निरूपितत्वेन तस्य च संसर्गपदार्थे स्वरूपेणान्वयः। तथा चैकपदार्थनिष्ठानुयोगितानिरूपकोऽपरपदार्थनिष्ठप्रतियोगितानिरूपकः संसर्गः शाब्दबोधनिरूपिता आकाङ्क्षानिरूपितप्रयोज्यत्वविशिष्टा या विषयता तन्निरूपिताश्रयत्वविशिष्ट इति संसर्गमुख्यविशेष्यको बोधः। शाब्दबोधे एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गभासिका समभिव्याहाररूपाऽऽकाङ्क्षैव न तु प्रकारविशेष्ययोरिव शक्तिरिति पर्य्यवसितोऽर्थः। उद्देश्यतावच्छेदकव्यापकत्वं नियमेन विधेये भासते। तेनैकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गत्वव्यापकत्वमाकाङ्क्षाप्रयोज्यशाब्दबोधीयविषयताश्रयत्वे लभ्यते। तेनाकाङ्क्षामन्तरा कुत्रापि शाब्दबोधं एकपदार्थेऽपरपदार्थस्य संसर्गो न भासते। पश्वादिपदजन्यशाब्दबोधे लाङ्गू-

लानुयोगिकलोमप्रतियोगिकसंसर्गस्य शक्तिभास्यस्याकाङ्क्षाप्रयोज्यशाब्द-बोधीयविषयताश्रयत्वाभावेन निरुक्तव्यापकत्वानुपपत्तिस्स्यादत एकपदार्थेऽपरपदार्थस्येत्यनयोस्संसर्गविशेषणत्वम् । न चानुमितौ प्रत्यक्षे च भूतलं घटवदित्यादौ भूतलानुयोगिकघटप्रतियोगिकसंयोगादौ तादृशसंसर्गत्वरूपोद्देश्यतावच्छेदकस्य सत्त्वेऽपि विधेयभूतस्य निरुक्तविषयताश्रयत्वस्याभावेन व्यापकत्वानुपपत्तिस्तदवस्थैवेति वाच्यम् । एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गवृत्ति संसर्गताख्यशाब्दबोधीयविषयतामुद्दिश्याकाङ्क्षाप्रयोज्यत्वस्यैव विधानेनानुपपत्त्यभावात् । न च निरुक्तविषयतायास्तेन रूपेणाभानात् कथं तेन रूपेणोद्देश्यतेति चेत्-न । उद्देश्यताविधेयतयोर्विशेष्यताप्रकारतानात्मकतयोद्देश्यत्वे उद्देश्यतावच्छेदकरूपेण भासमानत्वस्यातन्त्रत्वात् ।

अथैकपदार्थ इत्यत्रत्यैकत्वस्यापरपदार्थ इत्यत्रत्यापरपदार्थस्य च कुत्रान्वयः—पदे पदार्थे वा ? नाद्यः । तथा सत्येकं यत्पदन्तदर्थानुयोगिकोऽपरं यत्पदन्तदर्थप्रतियोगिकस्संसर्ग इति बोधः । तत्रापरत्वं भेदः । स च यद्येकपदत्वावच्छिन्नप्रतियोगिताकस्तदाऽप्रसिद्धिरेकपदत्वस्य पदमात्रवृत्तित्वात् । यद्येकपदनिष्ठप्रतियोगिताकस्तर्ह्यव्यावर्त्तकत्वं द्वित्वादिनैकपदनिष्ठप्रतियोगिताकभेदस्य स्वस्मिन्नपि सत्त्वात् । न च पदविशिष्टः संसर्ग आकाङ्क्षाभास्यः । वैशिष्ट्यं स्वार्थानुयोगिकत्वं स्वनिष्ठप्रतियोगिताकभेदवत् यत्पदन्तदर्थप्रतियोगिकत्वमित्युभयसम्बन्धेन । तत्र भेदस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताक इति ग्रन्थकृतस्तात्पर्यमिति वाच्यम् । घटपदपशुपदादिस्थले घटत्वादिसंसर्गस्य व्यवच्छेदेऽपि एवपदस्थले दोषात् । तत्र हि नान्ययोगव्यवच्छेदत्वावच्छिन्ननिरूपिता शक्तिरन्ययोगव्यवच्छेदाप्रसिद्धेः । किन्तु अन्ययोगे व्यवच्छेदे च खण्डशः शक्तिः । व्यवच्छेदे अन्ययोगस्य स्वनिष्ठप्रतियोगिताकत्वरूपः संसर्ग आकाङ्क्षाभास्यः । तत्र पदान्तरस्याभावेन तत्संसर्गस्यासंग्रहापत्तिः । नान्त्यः । तत्पक्षे यद्यपि आद्यपक्षोक्तदोषद्वयवारणाय पदार्थविशिष्टः संसर्ग इत्यत्रैव तात्पर्यं वक्तुं शक्यते । वैशिष्ट्यञ्च

स्वानुयोगिकत्वस्वेतरार्थप्रतियोगिकत्वोभयसम्बन्धेन । एवस्थले पदार्थयो-रन्ययोगव्यवच्छेदयोर्भेदेन दोषाभावस्तथापि अभेदान्वयस्थले नीलो घट इत्यादौ प्रतियोगिन एवानुयोगित्वेन दोषादिति चेत्-अत्रोच्यते । धर्मविशिष्टः संसर्गः संसर्गमर्य्यादया भासते । वैशिष्ट्यं स्वावच्छिन्नानुयोगितानिरूप-कत्वस्वेतरधर्म्मावच्छिन्नप्रतियोगितानिरूपकत्वोभयसम्बन्धेन । एवशब्द-स्थले च व्यवच्छेदत्वधर्म्मान्ययोगत्वधर्म्मावादाय समन्वयः । नन्वेवमपि पशुपदे लाङ्गूलत्वमादाय लोमप्रतियोगिकसंसर्गेऽपि शक्तिभास्ये धर्म्म-विशिष्टसंसर्गत्वरूपोद्देश्यतावच्छेदकस्य सत्त्वेऽप्याकाङ्क्षाभास्यत्वरूपविधे-यस्याभावेनोद्देश्यतावच्छेदकव्यापकत्वस्याकाङ्क्षाभास्यत्वरूपे भङ्गापत्तिः । राज्ञो राजा राजराज इत्यादौ वाक्ये समासे स्वस्वामिभावरूपसंसर्गस्य राजत्वे राजत्वभेदाभावेनाकाङ्क्षाभास्यत्वानापत्तिश्च । समवायेनाभावो नास्तीत्यादौ नञर्थाभावेऽभावपदार्थप्रतियोगिकस्य स्वनिष्ठप्रतियोगिताकत्व-स्याभावत्वप्रतियोगिकस्य स्वावच्छिन्नप्रतियोगिताकत्वस्य च संसर्गस्याकाङ्-क्षाभास्यत्वानापत्तिश्च प्रतियोगितावच्छेदकस्याभावत्वस्यानुयोगितावच्छेद-काभास्यत्वभिन्नत्वाभावादभावत्वनिष्ठप्रतियोगितायाश्च निरवच्छिन्नत्वादिति चेत्-न । उपस्थितीयविशेष्यताविशिष्टः संसर्ग इत्यर्थेनादोषात् । वैशि-ष्ट्यञ्च स्वप्रयोज्यविशेष्यतानिरूपकत्वस्वनिरूपितत्वाभाववदुपस्थितीयविष-यताप्रयोज्यप्रकारतानिरूपकत्वोभयसम्बन्धेन । घटपश्वादिस्थले च समवाय-सम्बन्धीयप्रकारताविशेष्यताप्रयोजकयोरुपस्थितीयघटत्वघटनिष्ठयोः प्रकार-ताविशेष्यतयोर्लाङ्गूलनिष्ठविशेष्यतालोमनिष्ठप्रकारताप्रयोजकयोरुपस्थि-तीयलाङ्गूललोमनिष्ठविशेष्यतयोश्च निरूप्यनिरूपकभावात् । राज्ञो राजे-त्यादौ समवायेनाभावो नास्तीत्यादावपि प्रतियोग्यनुयोगिवाचकविभिन्नराज-पदजन्योपस्थितीयराजनिष्ठविषयतयोरभावनञ्पदजन्योपस्थितीयाभावनिष्ठ-विषयतयोश्च शाब्दबोधीयप्रकारताविशेष्यताप्रयोजकयोर्भिन्नतया निरूप्य-निरूपकभावविरहात् । न च अभावत्वप्रतियोगिकस्वावच्छिन्नप्रतियोगि-ताकत्वसंसर्गस्यासंग्रह एव । अभावपदजन्योपस्थितीयाभावत्वनिष्ठविषय-

-ताया नञ्पदजन्योपस्थितीयाभावनिष्ठविषयतानिरूपिताभावत्वनिष्ठविषयताभेदे मानाभावेनाभावनिष्ठविषयतानिरूपितत्वादिति वाच्यम् । अभावस्यैव स्ववृत्त्यभावत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नञर्थाभावेऽन्वयात् । स्वप्रयोजकवृत्तिज्ञानीयविषयत्वानिरूपितवृत्तिज्ञानीयविषयताप्रयोज्योपस्थितीयविषयताप्रयोज्यप्रकारतानिरूपकत्वसम्बन्धस्य द्वितीयसम्बन्धस्थाने निवेशनीयत्वाच्च । अभावपदनिष्ठवृत्तिज्ञानीयविषयताया नञ्पदनिष्ठवृत्तिज्ञानीयविषयताया निरूप्यनिरूपकभावविरहेणासङ्ग्रहासम्भवात् । न च समवायस्यैकत्वेन घट इत्यादौ विभक्त्यर्थैकत्वप्रतियोगिकाकाङ्क्षाभास्यसमवायादभिन्नस्य घटत्वप्रतियोगिकसमवायस्य वृत्तिभास्यस्य संग्रहापत्तिः । एकत्वप्रतियोगिकसमवायस्योपस्थितीयविषयताविशिष्टत्वे घटत्वप्रतियोगिकस्य तस्य न तत्त्वमित्यस्य वक्तुमशक्यत्वादिति वाच्यम् । समवास्यैकत्वे एकत्वप्रतियोगिकसमवाय आकाङ्क्षाभास्यो घटत्वप्रतियोगिकः समवायो नाकाङ्क्षाभास्य इत्यस्यापि वक्तुमशक्यतयेष्टत्वस्यैवाङ्गीकरणीयत्वात् । न च घटत्वनिष्ठप्रकारतानिरूपिता समवायनिष्ठा संसर्गता आकाङ्क्षाप्रयोज्येति व्यवहारापत्तिः, तस्या घटपदनिष्ठवृत्तिप्रयोज्यत्वस्यैव सत्त्वेनेष्टापत्तेरयोगात् । निरुक्तोपस्थितीयविषयताविशिष्टसंसर्गनिष्ठसंसर्गताया एवाकाङ्क्षाप्रयोज्यत्वादिति वाच्यम्, उपस्थितीयविषयताविशिष्टा संसर्गता आकाङ्क्षाप्रयोज्येत्यत्रैव तात्पर्यात् । वैशिष्ट्यं स्वप्रयोज्यविशेष्यतानिरूपितत्वस्वप्रयोजकवृत्तिज्ञानीयविषयत्वानिरूपितवृत्तिज्ञानीयविषयताप्रयोज्योपस्थितीयविषयताप्रयोज्यप्रकारतानिरूपितत्वोभयसम्बन्धेन । समवायैकत्वेऽपि संसर्गतयोर्भेदेनाकाङ्क्षाप्रयोज्यत्वाप्रयोज्यत्वयोरुपपत्तेरिति दिक् ।

वृत्तिज्ञानीयविषयत्वाप्रयोज्या संसर्गता आकाङ्क्षाप्रयोज्या । उपस्थितीयविषयत्वाप्रयोज्या शाब्दबोधीया संसर्गता आकाङ्क्षाप्रयोज्येत्याद्यपि वक्तुं शक्यत इति केचित् । तन्न । नीलो घट इत्यादिवाक्यजन्यज्ञानविषयोऽभेदो वृत्तिभास्य आकाङ्क्षाभास्यो वेति संशये नैयायिकेनाकाङ्क्षाभास्य

**भासते । स च क्वचिदभेदः । क्वचिच्च तदतिरिक्त एवाधाराधेयप्रति-**

---

इत्युच्यते । मीमांसकेन वृत्तिभास्य इत्युच्यते । तस्मिन् समये वृत्तिभास्यत्वस्य वृत्त्यभास्यत्वस्य वा निश्चयाभावेन वृत्त्यभास्यत्वादेराकाङ्क्षाभास्यत्वोद्देश्यतावच्छेदके प्रवेशानर्हत्वात् । घटो नास्तीति नेत्यत्र घटसत्ताभावाभावः प्रतीयते । नञ्द्वयनिष्ठवृत्तिज्ञानयोः समानाकारकतया तदीयविषयतयोरभावद्वयोपस्थितिद्वयविषयताप्रयोजकतया नञर्थाभावत्वनिष्ठप्रकारताप्रयोजकोपस्थितीयविषयताप्रयोजकवृत्तिज्ञानीयविषयताया अपरनञर्थाभावनिष्ठविशेष्यताप्रयोजकोपस्थितिविषयताप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितत्वाभावविरहेण स्वावच्छिन्नप्रतियोगिताकत्वसंसर्गस्यासंग्रहस्तु नापाद्यः । तत्र घटसत्ताभावत्वस्यैवावच्छिन्नप्रतियोगितयाऽन्वयेन तन्निष्ठप्रकारताप्रयोजकत्वस्य परम्परया घटनिष्ठवृत्तिज्ञानीयविषयताया अपि सत्त्वेन तस्याश्चाभावनिष्ठविशेष्यताप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितत्वविरहेणापत्त्यभावादिति दिक् ।

स च संसर्गः क इति जिज्ञासायामाह—क्वचिदभेद इत्यादि । आधाराधेय इत्यादेः प्रत्येकं भावेत्यत्रान्वयेन आधाराधेयभावः प्रतियोग्यनुयोगिभावो विषयविषयिभाव इत्यर्थः । यद्यपि न्यायसिद्धान्ते आधाराधेयभाव इत्यादेः समुदितस्य न सम्बन्धता क्वचिदस्ति तथापि वैयाकरणमतेनास्य ग्रन्थस्य सत्त्वान्नासंगतिः । तन्मते 'सम्बन्धो हि सम्बन्धिभ्यां भिन्नः, द्विष्ठ' इत्यादिभाष्यात् प्रतियोग्यनुयोगिनिष्ठस्यैव आधारतानिरूपिताधेयतेत्यादि क्रमेण समुदायस्य सम्बन्धत्वात् । भूतले घटः, घटो नास्ति, घटज्ञानमित्यादौ क्रमेण तेषां सम्बन्धानां प्रतीतिः । न च न्यायमतेनैव आधारत्वमाधेयत्वं प्रतियोगित्वमनुयोगित्वं विषयत्वं विषयित्वं सम्बन्ध इत्यर्थसम्भवेनायं ग्रन्थोऽस्तु स्वरूपसम्बन्धेनाधारे निरूपकत्वसम्बन्धेनाधेये सत्त्वेनाधारत्वादेरपि द्विष्ठत्वस्योपपादनसम्भवादिति वाच्यं, अनुयोगिनिष्ठस्यैव सम्बन्धत्वेनाधेयत्वानुयोगित्वविषयित्वानां सम्बन्धत्वेऽप्याधारत्वप्रतियोगित्व-

योग्यनुयोगिविषयविषयिभावादिः। अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्त्तिना च पदेनोपस्थापितस्यैव

---

विषयत्वानां संसर्गतया क्वचिदप्यभानात्। यद्यपि द्विष्ठत्वाभावेनाभेदस्य वैयाकरणमते सम्बन्धत्वाभावस्तथापि विशिष्टबुद्धित्वहेतुकानुमितिसिद्धस्य नीलो घट इत्यादौ नीलविशिष्टघटबुद्धौ सम्बन्धावगाहित्वस्यान्यथाऽनुपपत्त्या तस्य सम्बन्धत्वं कल्प्यते नैयायिकैरिति भावः।

दुरधिगमेऽस्मिन् शास्त्रे शिष्यस्य झटिति प्रवेशायाभेदस्य सूचीकटाहन्यायेनोद्देशक्रमेण च संसर्गतया भानस्थलं तावदाह—प्रातिपदिकार्थे इत्यादि। अनुयोगित्वं सप्तम्यर्थः। तत्र प्रकृत्यर्थस्य वृत्तित्वसम्बन्धेन, तस्य चाभेदे निरूपकत्वसम्बन्धेनान्वयः। उपस्थापितस्येत्यत्र वृत्तित्वसम्बन्धेन प्रकृत्यर्थान्वितषष्ठ्यर्थप्रतियोगित्वस्य च निरूपकत्वसम्बन्धेन तत्रैवाभेदेऽन्वयः। तथा च प्रातिपदिकार्थनिष्ठानुयोगितानिरूपकः स्वसमानविभक्तिकस्वाव्यवहितपूर्वान्यतरपदोपस्थाप्यार्थनिष्ठप्रतियोगितानिरूपकाभेद आकाङ्क्षाप्रयोज्यसंसर्गताश्रय इत्यर्थः। अननुगमवारणाय प्रातिपदिकविशिष्टोऽभेद आकाङ्क्षाप्रयोज्यसंसर्गताश्रय इत्यर्थ इति वक्तव्यम्। वैशिष्ट्यञ्च स्वप्रयोज्यविशेष्यतानिरूपकत्वस्वविशिष्टपदप्रयोज्यप्रकारतानिरूपकत्वोभयसम्बन्धेन। तत्र वैशिष्ट्यं स्वप्रकृतिकविभक्तिसजातीयविभक्तिप्रकृतित्वस्वाव्यवहितपूर्ववृत्तित्वान्यतरसम्बन्धेन। नीलो घट इत्यादौ घटरूपप्रातिपदिकविशिष्टो भेदः। तत्र घटरूपप्रातिपदिकस्य नीलेऽन्यतरघटक आद्यः सम्बन्धः। नीलघट इत्यादौ समासे च घटस्य नीले द्वितीयः सः। अत्र नाभेदत्वावच्छेदेन प्रातिपदिकविशिष्टाकाङ्क्षाप्रयोज्यसंसर्गतावत्त्वं विधीयते। अत्र प्रातिपदिकवैशिष्ट्यं पूर्वोक्तसम्बन्धेनैव संसर्गतायां बोध्यम्। तथा सत्यभेदत्वव्यापकत्वं तादृशसंसर्गतारूपविधेये प्रतीयेत। तच्च न सम्भवति। स्तोकं पचतीत्यादिक्रियाविशेषणस्थले व्यभिचारात्। किन्तु प्रातिपदिकप्रयोज्यविशेष्यतानिरूपिताभेदनिष्ठसंसर्गतात्वावच्छेदेन प्रातिपदिकविशिष्ट-

संसर्गमर्यादया भासते यथा नीलो घटो नीलघटमानयेत्यादौ घटादौ नीलादेः, न तु विरुद्धविभक्तिमत्पदार्थस्य। नीलस्य घट इत्यादौ नीलघटाभेदान्वयबोधस्य सर्वानुभवविरुद्धत्वात्। स्वसमानविभ-

---

पदप्रयोज्यप्रकारतानिरूपितत्वविशिष्टमाकाङ्क्षाप्रयोज्यत्वं विधीयते। प्रातिपदिकवैशिष्ट्यं पूर्ववत्। निरूपितत्ववैशिष्ट्यं सामानाधिकरण्येन। न च क्रियाविशेषणस्थलीयाभेदसंसर्गताया असंग्रह इति वाच्यम्। इष्टापत्तेः। तत्र नियामकान्तरस्यैव वक्ष्यमाणत्वात्। न चार्द्धपिप्पलीत्यादिपूर्वपदार्थप्रधानसमासे व्यभिचारस्तत्रैकदेशिसमासस्य प्रत्याख्यानेन पूर्वपदार्थार्द्धानुयोगिकपिप्पलीरूपोत्तरपदार्थप्रतियोगिकाभेदस्य संसर्गमर्यादया भासमानत्वादिति वाच्यं, अन्यतरसम्बन्धस्थाने स्वाव्यवहितोत्तरत्वस्य पूर्वोक्तसम्बन्धद्वयसहितस्यान्यतमत्वेन प्रवेशनीयत्वात्। पिप्पल्यादिपदस्यैव पिप्पल्यर्द्धादौ लक्षणा। पूर्वपदञ्च तत्रैव तात्पर्यग्राहकमित्यस्य वक्ष्यमाणत्वेनाभेदस्याकाङ्क्षाभास्यत्वाभावाच्च।

**न तु विरुद्धविभक्तिमदिति।** विरुद्धत्वञ्च स्वप्रकृतिकविभक्त्यपेक्षया बोध्यम्। तत्त्वञ्च तादृशविभक्तिनिष्ठो यः प्रथमात्वाद्यन्यतमस्तदभाववत्त्वम्। यथा नीलस्य घट इत्यादौ घटप्रकृतिकसुविभक्तिनिष्ठः प्रथमात्वाद्यन्यतमः प्रथमात्वन्तदभाववत्त्वं नीलप्रकृतिकङस्विभक्तौ।

तत्र हेतुमाह—**नीलस्य घट इत्यादौ नीलघटाभेदान्वयबोधस्य सर्वानुभवविरुद्धत्वादिति।** प्रयोज्यत्वं सप्तम्यर्थः। तस्य स्वप्रकारकत्वसम्बन्धेनानुभवेऽन्वयः। अनुभवविरुद्धत्वञ्चानुभवविषयत्वाभावरूपम्। तथा च नीलघटाभेदान्वयबोधस्य नीलस्य घट इत्यादिवाक्यप्रयोज्यत्वप्रकारको यः सर्वानुभवस्तद्विषयत्वाभावादित्यर्थः। नीलघटाभेदान्वयबोधो नीलस्य घट इत्यादिवाक्यप्रयोज्य इत्याकारकानुभवाभावादिति भावः। प्रातिपदिकवैशिष्ट्यनियामकसम्बन्धघटकस्वसमानविभक्तिकत्वं किमित्याशङ्कायामाह

क्तिकत्वं च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम् । साजात्यं च विभक्तिविभाजकप्रथमात्वादिना न तु समानानुपूर्वीकत्वं साजा-

---

—त्वसमानविभक्तिकत्वञ्चेति । विभक्तिविभाजकेति स्वनिष्ठो यो विभक्तिविभाजकः प्रथमात्वाद्यन्यतमो धर्म्मस्तद्वत्त्वमित्यर्थः ।

ननु किमिदं विभक्तिविभाजकत्वम् ? न तावद्विभक्तित्वविशिष्टत्वं स्वव्याप्यत्वस्वव्याप्याव्याप्यत्वोभयसम्बन्धेन । विभक्तित्वव्याप्यसुप्त्वव्याप्यत्वेन प्रथमात्वादेर्विभक्तिविभाजकत्वानापत्तेः । न च विभक्तित्वव्याप्यत्वमेव विभक्तिविभाजकत्वमिति प्रथमात्वादौ नाव्याप्तिरिति वाच्यं, सुत्वादीनामपि विभक्तित्वव्याप्यत्वेन तत्त्वापत्तेः । न चेष्टापत्तिः । आकाशत्वादावपि तथा सति पदार्थविभाजकत्वस्यैष्टव्यतया 'आकाशत्वञ्च न पदार्थविभाजकोपाधि'रिति मुक्तावलीप्रत्यक्षखण्डोक्तग्रन्थस्यासङ्गत्यापत्तेः ।

नन्वत्र विभक्तिपदं सुप्परम् । तथा च सुब्विभाजकधर्म्मेणेत्यर्थः । सुब्विभाजकत्वञ्च सुप्त्वव्याप्यत्वे सति सुप्त्वव्याप्याव्याप्यत्वमिति न प्रथमात्वादावव्याप्तिरिति चेत्—न । सुप्त्वव्याप्यसर्वनामस्थानत्वव्याप्यत्वेन तस्या दुर्वारत्वात् । न च नपुंसकप्रकृतिकस्वादौ सर्वनामस्थानत्वाभाववति प्रथमात्वस्य सत्त्वेन तदव्याप्यत्वाददोष इति वाच्यं; टादिसुप्पर्य्यन्तस्थितेन सुप्त्वव्याप्येनाऽऽप्त्वेन व्याप्यत्वात् तृतीयात्वादावव्याप्तेर्दुर्वारत्वात् ।

अत्रोच्यते—सुप्त्वविशिष्टत्वं सुप् विभाजकत्वम् । वैशिष्ट्यञ्च स्वव्याप्यत्वस्वव्याप्याव्याप्यत्वोभयसम्बन्धेन । द्वितीयसम्बन्धघटके स्वव्याप्ये स्वव्याप्यविशिष्टभिन्नत्वमपि देयम् । तत्र वैशिष्ट्यं स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसम्बन्धेन । प्रथमात्वादौ सुप्त्वस्य स्वव्याप्यत्वं स्वव्याप्यविशिष्टभिन्नं यत्स्वव्याप्यन्तदव्याप्यत्वमप्यस्तीति लक्षणसमन्वयः । आप्त्वं तु तृतीयात्वविशिष्टमेव । उदासीने घटत्वादावतिव्याप्तिवारणाय प्रथमः सम्बन्धः । न च स्वस्यापि स्वव्याप्यत्वेन सुप्त्वेऽतिव्याप्तिः । आद्य-

सम्बन्धस्थाने स्वभिन्नत्वस्वव्याप्यत्वोभयसम्बन्धेन स्वविशिष्टत्वनिवेशनात्। सुत्वादावतिव्याप्तिवारणाय द्वितीयः सम्बन्धः। सुप्त्वव्याप्यं यदाप्त्वन्तद्व्याप्यत्वेन तृतीयात्वादावव्याप्त्यापत्त्या द्वितीयसम्बन्धघटके स्वव्याप्ये स्वव्याप्यविशिष्टभिन्नत्वं निवेशितम्। आप्त्वे सुप्त्वव्याप्यतृतीयात्वादिविशिष्टत्वमेव न तु तद्विशिष्टभिन्नत्वम्। यत आप्त्वस्य तृतीयात्वसामानाधिकरण्यं टादिकमादाय तदभावसामानाधिकरण्यं ङेप्रभृतिमादाय तेनाप्त्वव्याप्यत्वेऽपि निरुक्ताव्याप्यत्वेन तृतीयात्वादावव्याप्त्यभावः। न च सुत्वादौ सुप्त्वव्याप्यप्रथमात्वादिव्याप्यत्वादेवातिव्याप्तिभङ्गो वाच्यः। स च न सम्भवति। प्रथमात्वादेर्हि सु औ एतदन्यतरत्वादिकं सुप्त्वव्याप्यन्तद्विशिष्टत्वमेव। न तु तद्भिन्नत्वमिति वाच्यं, स्वव्याप्यविशिष्टभिन्नत्वस्थाने स्वविशिष्टविशिष्टभिन्नत्वस्य निवेशनात्। तत्र चरमवैशिष्ट्यं पूर्वोक्तमेव। आद्यञ्च स्वव्याप्यत्वस्वव्याप्याघटितत्वोभयसम्बन्धेन। तथा च निरुक्तान्यतरत्वमादाय नोक्तदोषः। तस्य सुप्त्वव्याप्यत्वेऽपि सुप्त्वव्याप्येन सुत्वेन घटितत्वात्। न चैवमपि सु अम् एतदन्यतरत्वे अतिव्याप्तिः। तत्र सुप्त्वव्याप्यत्वसुप्त्वव्याप्याव्याप्यत्वयोः सत्त्वादिति वाच्यं, स्वव्याप्याघटितत्वस्यापि तृतीयस्य सुप्त्ववैशिष्ट्यघटकस्य स्वीकारेण तादृशान्यतरत्वादेः सुप्त्वव्याप्यसुत्वादिघटितत्वेनातिव्याप्त्यभावात्। तथा च सुप्त्वविशिष्टो धर्मः सुब्विभाजकः। वैशिष्ट्यञ्च स्वविशिष्टत्वस्वविशिष्टाव्याप्यत्वस्वव्याप्याघटितत्वैतत्त्रितयसम्बन्धेन। आद्ये स्वव्याप्यत्वस्वभिन्नत्वोभयसम्बन्धेन वैशिष्ट्यम्। द्वितीये स्वव्याप्यत्वस्वविशिष्टविशिष्टभिन्नत्वोभयसम्बन्धेन वैशिष्ट्यम्। तत्राद्यवैशिष्ट्यं स्वव्याप्यत्वस्वव्याप्याघटितत्वोभयसम्बन्धेन। द्वितीयवैशिष्ट्यं स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसम्बन्धेन। सर्वेषां विशेषणानां फलानि पूर्वमुक्तानि।

नन्वेवं सति विभक्तिविभाजकः प्रथमात्वादिक एव। तथा च प्रथमात्वादिकथनं व्यर्थमेवेति चेत्-न। पर्य्यवसितस्यैव स्पष्टतया कथनात्। स्ववृत्तिर्यः प्रथमात्वाद्यन्यतमो धर्म्मस्तद्वत्त्वं स्ववृत्तिर्यः सुब्विभाजकस्तद्वत्त्वं वा साजा-

त्यमिति कथनेऽपि तत्त्यभावः। सुप्त्वविशिष्टसंख्यावत्त्वं सुब्विभाजकत्वम्। संख्यायां सुप्त्ववैशिष्ट्यं स्वव्यापकत्वस्वव्याप्यवृत्तित्वस्वाव्याप्यावृत्तित्वस्वव्याप्यविशिष्टभिन्नत्वैतच्चतुष्टयसम्बन्धेन। व्याप्यतावच्छेदकः स्वरूपसम्बन्धो व्यापकतावच्छेदकश्च स्वाश्रयाश्रयत्वसम्बन्धः। सा च सङ्ख्या प्रथमात्वादिषु सप्तसु वर्त्तमाना सप्तत्वसंख्या तद्वत्त्वं प्रथमात्वादिषु सप्तसु। यत्र यत्र स्वरूपसम्बन्धेन सुप्त्वन्तत्र तत्र स्वाश्रयाश्रयत्वसम्बन्धेन प्रथमात्वादिनिष्ठं सप्तत्वमिति व्याप्तिः। तस्याञ्च सङ्ख्यायां सुप्त्वस्य व्यापकत्वं तस्य व्याप्यं प्रथमात्वादि तद्वृत्तित्वं तस्याव्याप्यं घटत्वादि तदवृत्तित्वं तस्य व्याप्यं प्रथमात्वादि तद्वैशिष्ट्यन्नास्ति। ततो वैशिष्ट्यं स्ववृत्तित्वस्वेतरस्वसमानाधिकरणावृत्तित्वोभयसम्बन्धेन। तत्राद्यसम्बन्धसत्त्वेऽपि द्वितीयो नास्तीति तद्विशिष्टभिन्नत्वं सङ्ख्यायामिति लक्षणसमन्वयः। प्रथमात्वादिगतघटत्वनिरासाय स्वव्यापकत्वम्। सुत्वसहितप्रथमात्वादिगताष्टत्ववारणाय स्वव्याप्यविशिष्टभिन्नत्वमवेध्यमित्यपि केचित्।

न तु समानानुपूर्वीकत्वमिति। तथा सति हि स्वप्रकृतिकविभक्तिसमानानुपूर्वीकविभक्तिकेनेत्यर्थस्स्यात्। तथा च वेदाः प्रमाणमित्यादौ दोषः। स्वसमानानुपूर्वीकत्वञ्च स्वघटकावृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मावच्छिन्नाघटितत्वस्वघटकावृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मावच्छिन्नाघटितत्वसम्बन्धावच्छिन्नस्वनिरूपितवृत्तितावत्त्वोभयसम्बन्धेन। स्वविशिष्टत्वं यथा घटसमानानुपूर्वीको घटस्तत्र स्वं घटस्तद्घटको घकारो घशब्दः टशब्दः टकारोऽकारश्च। तदवृत्तिः श्रावणप्रत्यक्षविषयतावच्छेदको धर्मः पत्वादिस्तदवच्छिन्नपकाराद्यघटितत्वं घटशब्दे। स्वस्मिन् घटशब्दे द्वितीयो घटशब्दः पूर्वोक्तसम्बन्धेन वर्त्तत इति तत्सम्बन्धावच्छिन्नस्वनिरूपितवृत्तितावत्त्वमप्यस्तीति लक्षणसमन्वयः। घटशब्दे नीलघटसमुदायसमानानुपूर्वीकत्ववारणाय द्वितीयः सम्बन्धः। तत्र समुदाये हि तेन सम्बन्धेन घटशब्दस्यावर्त्तनात्तत्समुदायनिरूपिततत्सम्बन्धावच्छिन्नवृत्ततावत्त्वस्य घटशब्देऽभावः।ताललता सररसेत्यादीनाञ्च न समानानुपूर्वीकत्वम्। ताल-

त्यम् । वेदाः प्रमाणं शतं ब्राह्मणा इत्यादावन्वयबोधानुपपत्तेः ।

ननु 'विंशत्याद्याः सदैकत्वे' इत्यनुशासनात् शतं ब्राह्मणा इत्यादेः साधुत्वेपि वेदाः प्रमाणमित्यादयः कथं प्रयोगाः, विशेष्य-

---

शब्दघटकावृत्तिश्चावणप्रत्यक्षविषयतावच्छेदको धर्मो लशब्दोत्तरतकारत्वन्तदवच्छिन्नलतशब्दघटितत्वस्यैव लताशब्दे, सरशब्दघटकावृत्तिस्तादृशो धर्मो रशब्दोत्तरसकारत्वन्तदवच्छिन्नरसशब्दघटितत्वस्यैव रसशब्दे सत्त्वादिति दिक् ।

बोधानुपपत्तेरिति । तृतीयान्तसुन्दराभ्यां समभिव्याहृतचतुर्थ्यन्तघटाभ्यामित्यतोऽपि समानानुपूर्वीकत्वसत्त्वादभेदान्वयबोधापत्तेश्चेत्यपि बोध्यम् । सिद्धान्ते तु प्रथमात्वादिना साजात्यविरहान्न दोषः ।

ननु नीलो घटा इत्यादावभेदान्वयवारणाय तत्र समानवचनत्वस्य प्रयोजकतया वेदाः प्रमाणमित्यतो बोधस्यैवाभाव इति तदनुरोधोऽसङ्गत इत्याह—नन्विति । सदैकत्व इति । सदैकवचनान्ता इत्यर्थः । प्रसक्त च क इति । नियतवचनत्वानुशिष्टभिन्नविशेष्यविशेषणवाचकपदयोस्समानवचनत्वमभेदान्वयप्रयोजकमित्यर्थः । समानलिङ्गकत्वञ्च स्ववृत्तिपुंल्लिङ्गत्वस्त्रीलिङ्गत्वनपुंसकलिङ्गत्वान्यतमधर्मवत्त्वम् । पुंल्लिङ्गत्वादिकञ्च पुंस्त्वस्त्रीत्वनपुंसकत्वबोधकत्वमेव । पुंस्त्वादिकञ्च प्राण्यप्राणिसाधारणं सत्त्वादिगुणानामुपचयापचयसाम्यरूपं, प्राणिवृत्ति च लिङ्गयोनितदभावरूपम् । तत्र गुणदोषावप्रकृतत्वाद्विस्तरभयाच्च न विचार्य्येते ।

इति हेतुस्तदुद्भव इति । 'शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात् । काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे' इति मम्मटकारिका । शक्तिः संस्कारविशेषः, लोककाव्यशास्त्राद्यवेक्षणजन्या निपुणता व्युत्पत्तिविशेषः, यः काव्यं करोति जानाति च तदुपदेशेन काव्यकरणयोजनादौ पौनःपुन्येन प्रवृत्तिरभ्यासः, इति त्रयः समुदिता हेतुरिति तस्या अर्थः ।

विशेषणवाचकपदयोरसति विशेषानुशासने समानवचनकत्वनियमात्। अन्यथा घटा नील इत्यादेरपि साधुताप्रसङ्गात्। समानलिङ्गकस्थले तथा नियमोपगमेन वेदाः प्रमाणमित्यादेः साधुत्वोपपादनेऽपि 'इति हेतुस्तदुद्भवे' इति कारिकाया इति 'त्रयः समुदिता हेतु'रिति काव्यप्रकाशव्याख्याया असंगतिर्दुर्वारैव। एवमसमानलिङ्गकस्थले विशेष्यवाचकपदासमानवचनस्यापि विशेषणपदस्य साधुत्वे तादृशस्थले औत्सर्गिकमेकवचनमेव सर्वत्र विशेषणपदानन्तरं प्रयोक्तुमुचितमिति 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' पितरो देवता इत्यादेरनुपपत्तिः। मैवम्। यत्र विशेष्यवाचकपदो-

---

यत्र विशेष्यवाचकेत्यादि। यत्रेति। वाक्य इति शेषः। घटकत्वं सप्तम्यर्थः पदेऽन्वेति। वाचकेति। बोधकेत्यर्थः। तेन लाक्षणिकविशेष्यपदस्य नासङ्ग्रहः। उत्तरत्वञ्चोत्तरत्वेनानुसन्धीयमानत्वम्। तेन दध्यादिविशेष्यबोधकपदोत्तरविभक्तेरसत्त्वेऽपि न दोषस्तदनुसन्धानस्य सत्त्वात्। विभक्तिपदानुपादाने विशेष्यवाचकपदोत्तरयत्किञ्चित्पदतात्पर्य्येत्येव कथने सुन्दरं दधि बहवो गुणा इत्यादौ सौन्दर्य्ये एकत्वविवक्षायां विशेष्यवाचकदधिपदोत्तरबहुपदतात्पर्य्यविषयबहुत्वविरुद्धैकत्वस्य विवक्षिततया समानवचनत्वानुपपत्तिर्विभक्तिनिवेशे तत्तात्पर्य्यविषयैकत्वसंख्याविरुद्धत्वासम्भवान्न दोष इति तु न युक्तमुक्तग्रन्थेन तादृशाविवक्षितत्वे समानवचनत्वव्याप्यत्वस्यैव लाभेन व्याप्यविरहस्य व्यापकाभावापादकत्वासम्भवात्। अयोगोलके धूमाभावेऽपि वह्न्यभावादर्शनात् किन्तु विभक्तिपदं स्पष्टार्थमेव। प्रमाणं वेदशाखा एकत्वं प्रमेयमित्यादौ विशेष्यवाचकपदाव्यवहितोत्तरत्वनिवेशेनैवान्यत्रावश्यकेन निर्वाहात् विभक्तितात्पर्य्यविषयेत्यस्य विभक्तिजन्यबोधविषयत्वेनेच्छाविषये-त्यर्थः। यथाश्रुते तु वेदाः प्रमाणमित्यादावपि प्रमाणपदोत्तरविभक्तिजन्यबोधविषयत्वेनेच्छाविषयीभूतैकत्वे वेदपदोत्तरजस्पदजन्यबोधविषयो बहुत्वं

त्तर विभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्र

घटादिपदोत्तरसुपदजन्यबोधविषय एकत्वञ्च भवत्विति समूहालम्बनात्मकतात्पर्य्यस्यापि विशेष्यवाचकपदोत्तरविभक्तितात्पर्य्यत्वात्तद्विषयैकत्वसंख्याविरुद्धत्वाभावेन विशेष्यवाचकपदोत्तरविभक्तितात्पर्य्यविषयसंख्याविरुद्धसंख्याविवक्षितत्वाभावसत्त्वेन समानवचनत्वापत्तिः। इदानीन्तु एकत्वस्य वेदपदोत्तरजस्पदजन्यबोधविषयत्वेनेच्छाविषयत्वाभावान्न दोषः। संख्याविरुद्धत्वञ्च संख्याऽसामानाधिकरण्यं तादृशतात्पर्य्यविषयतावच्छेदकसंख्यात्वव्याप्यधर्मावच्छिन्नभिन्नत्वं वा।

अविवक्षितत्वमिति। विशेषणवाचकपदोत्तरविभक्त्याऽविवक्षितत्वमित्यर्थः। तत्रेत्यस्य तद्वाक्ये इत्यर्थः। सप्तम्यर्थघटकत्वस्य विशेष्यविशेषणपदयोरन्वयः। तथा च यद्वाक्यघटकविशेष्यबोधकपदोत्तरविभक्तिजन्यबोधविषयत्वेनेच्छीयविशेष्यतावच्छेदकसंख्यात्वव्याप्यजात्यवच्छिन्नभिन्नसंख्याया विशेषणबोधकपदोत्तरविभक्त्याऽविवक्षितत्वं तद्वाक्यघटकविशेष्यविशेषणपदयोस्समानवचनत्वमित्यर्थः। समानवचनत्वञ्च स्वोत्तरविभक्तिवृत्त्येकवचनत्वद्विवचनत्वबहुवचनत्वान्यतमधर्मवद्विभक्तिकत्वम्। न चैवं सुन्दरो घटमित्यादावपि समानवचनत्वसत्त्वादभेदान्वयापत्तिरिति वाच्यम्। समानविभक्तिकत्वस्यापि प्रयोजकत्वात्। समानानुपूर्वीकत्वस्यैव वा समानवचनत्वरूपत्वात्। घटो द्रव्यमित्यादौ च स्थानिवृत्त्यानुपूर्वीमादाय समानवचनत्वोपपादनसम्भवात्। तात्पर्य्यानिवेशे विभक्त्यर्थसंख्याविरुद्धेत्याद्यर्थे कुत्रचिज्जस्विभक्तेरप्येकत्वादौ लक्षणयैकत्वमपि वेदपदोत्तरजस्विभक्त्यर्थः। तद्विरुद्धायाः प्रमाणपदोत्तरविभक्त्यर्थसंख्याया अभावेन विशिष्टाभावस्य सत्त्वेन समानवचनत्वापत्तिः।

ननु विशेषणवाचकपदोत्तरविभक्त्या यत्र संख्याया अविवक्षा तत्र समानवचनत्वमित्येतावतैव निर्वाहे विरुद्धान्तनिवेशस्य किम्प्रयोजनमिति

विशेष्यविशेषणपदयोः समानवचनकत्वनियमः । अत एव पुरूर-

---

चेत्—अत्रोच्यते । यद् वेदत्वे एकत्वविवक्षयैकवचनान्तविशेष्यवाचकवेद-घटितं प्रमाणत्वे एकत्वविवक्षयैकवचनान्तविशेषणवाचकप्रमाणपदघटितं वेदः प्रमाणमिति वाक्यं तत्र समानवचनत्वानुपपत्तिः विशेषणवाचकपदो-त्तरविभक्त्या संख्याया विवक्षितत्वात् । विरुद्धान्तनिवेशे विशिष्टाभावस्य सत्त्वेनानुपपत्त्यभावः ।

ननु यत्र विशेष्यवाचकेत्यादिग्रन्थेनाविवक्षितत्वस्य समानवचनत्वव्या-प्यताया एव लाभेन विवक्षास्थले समानवचनत्वसत्त्वे क्षत्यभाव इति चेत्-इदमत्र बोध्यम् । नीलो घटा इत्यतोऽभेदान्वयवारणायाभेदान्वये विशेष्य-वाचकपदसमानवचनत्वं विशेषणवाचकपदवृत्तिप्रयोजकम् । विशेषणपदो-त्तरविभक्त्यर्थसंख्याविवक्षास्थले वेदाः प्रमाणमित्यादौ व्यभिचारवारणा-याविवक्षास्थलीयाभेदान्वये समानवचनत्वं प्रयोजकमिति वक्तव्यम् । तथा च प्रमाणत्वगतैकत्वतात्पर्य्यकस्वन्तप्रमाणपदघटितात् प्रमाणं वेदेति वाक्यादभेदान्वयवारणाय संख्याविवक्षास्थलीयाभेदान्वये विशेष्यवाचकप-दोत्तरवचनविभिन्नवचनकविशेषणवाचकपदत्वं प्रयोजकमित्यपि वक्तव्यम् । ततश्चोक्ते वेदः प्रमाणमितिस्थले व्यभिचारवारणाय संख्यायां विरुद्धान्तं निवेशनीयम् । एवं विभज्य कथने ग्रन्थविस्तरस्स्यादतो विशेष्यवाचकप-दोत्तरविभक्तितात्पर्य्यविषयसंख्याविरुद्धसंख्याया विशेषणवाचकपदोत्तर-विभक्त्या अविवक्षा यत्र तत्र समानवचनत्वमित्येवोक्तमिति ।

केचित्तु स्तोकं पचत इत्यादौ विशेषणवाचकस्तोकपदोत्तरविभक्त्या संख्याया अविवक्षितत्वात्समानवचनत्वापत्तिः, विरुद्धान्तनिवेशे तु विशेष्य-वाचकपच्धातुपदाव्यवहितोत्तरविभक्त्यभावेन तादृशविभक्तितात्पर्यसंख्या-विरुद्धादिविवक्षापर्य्यन्ताप्रसिद्ध्या तदभावस्याप्यप्रसिद्धत्वेन समानवचन-त्वाभाव इति विरुद्धान्तनिवेशस्य फलमित्याहुः । तन्न । स्तोकमत्त इत्यादौ

विशेष्यवाचकाद्धातोरव्यवहितोत्तरविभक्तेरसत्त्वेन विवक्षितत्वाभावपर्य्यन्तस्य प्रसिद्ध्या समानवचनत्वापत्तेर्विरुद्धान्तनिवेशेऽपि सत्त्वेन तदर्थं प्रातिपदिकपदप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकपदोत्तरविभक्त्या यत्र संख्याया अविवक्षा तत्र समानवचनत्वमित्यस्यैव वाच्यतया विरुद्धान्तनिवेशस्य फलाभावात्। न च मास्तु विरुद्धान्तनिवेशस्येदं फलन्तथापि पचतीति पक् कर्त्तरि क्विप्। ततो द्विवचने स्तोकं पचावित्यादौ प्रातिपदिकपदप्रयोज्यविशेष्यतायाः सत्त्वेन समानवचनत्वापत्तिर्दुर्वारा। विरुद्धान्तनिवेशेऽपि इयमापत्तिरस्त्येव। न च विरुद्धान्तनिवेशे विशेष्यविशिष्टाया विभक्तेर्निवेशः। वैशिष्ट्यञ्च स्वनिष्ठसंख्याबोधकत्वस्वबोधकपदाव्यवहितोत्तरत्वोभयसम्बन्धेन। स्तोकं पचावित्यादौ क्विबर्थनिष्ठसंख्याबोधकत्वेन स्तोकविशेष्यपाकनिष्ठसंख्याबोधकत्वाभावेन विशेष्यविशिष्टविभक्तेरप्रसिद्ध्या अविवक्षितत्वपर्य्यन्तस्याप्यप्रसिद्ध्या समानवचनत्वानापत्तिरिति वाच्यम्। भावक्विबन्ते स्तोकं सम्पदावित्यादौ विशेष्यभूतसम्पत्तिविशिष्टत्वस्यैव विभक्तेः सत्त्वेनापत्तेर्दुर्वारत्वादिति वाच्यम्। क्विपोऽनुसन्धानं विना शाब्दबोधानुदयेन तत्प्रकृतिभूतधातुप्रयोज्यैव विशेष्यता न क्विबन्तरूपप्रातिपदिकपदप्रयोज्या न वा विशेष्यभूतक्रियाविशिष्टत्वं विभक्तेर्विशेष्यबोधकधात्वव्यवहितोत्तरत्वस्यानुसन्धीयमानक्विपा व्यवहितत्वेन विभक्तेर्बाधात्। अव्यवहितोत्तरत्वं हि स्वोत्तरत्वेनानुसन्धीयमानोत्तरत्वेनाननुसन्धीयमानत्वस्वोत्तरत्वेनानुसन्धीयमानत्वोभयसम्बन्धेन स्वविशिष्टत्वमेवेति पक्षद्वयेऽपि दोषाभावात्।

अत्रोच्यते। दारविशेषणवाचकं सुन्दरादिपदमपि बहुवचनान्तमेव साधु सुन्दरा दारा इति न तु सुन्दरो दारा इति। तत्र दारपदोत्तरविभक्त्या संख्याया अविवक्षितत्वेन विशेष्यवाचकपदाव्यवहितोत्तरविभक्तितात्पर्य्यविषयीभूतसंख्येत्याद्यविवक्षितत्वपर्य्यन्तस्याप्रसिद्ध्या समानवचनत्वनियमानापत्त्या सुन्दरो दारा इत्यस्यापि साधुतापत्तिरिति—मैवम्। स्वाव्यवहितोत्तरविभक्तितात्पर्य्यविषयसंख्याविरुद्धसंख्याविषयकबोधजनकत्वेन तात्प-

र्य्यविषयविभक्तिप्रकृतित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्वसम्बन्धे-न स्वविशिष्टं विशेषणवाचकं पदं स्वसमानवचनमिति नियमस्वीकारेण दोषाभावात्। उक्तसम्बन्धस्यान्यत्र प्रसिद्ध्या तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वरूपसम्बन्धस्य विशेष्यवाचकदारपदप्रतियोगिकस्य विशेषणवाचकसुन्दरपदे सत्त्वेन समानवचनत्वनियमात्। न च भेदान्वयस्थले विशेषणवाचकराजादिपदोत्तरविभक्त्या संख्याया अविवक्षणे राज्ञः पुरुषा इत्यादौ समानवचनत्वनियमापत्तिरिति वाच्यं, स्वप्रयोज्यविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वरूपद्वितीयसम्बन्धस्यापि वैशिष्ट्यनियामकतया प्रवेशनीयत्वेनादोषात्। राजपदस्याभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वाभावात्। न चैवमपि स्तोकं पचावित्यादौ धातोर्वैशिष्ट्यं स्तोकपदेऽस्ति। क्विपोनुसन्धानेन प्रतियोगितावच्छेदकसम्बन्धस्याभावात्ततश्च समानवचनत्वापत्तिस्तदवस्थेति वाच्यम्। स्वाव्यवहितोत्तरविभक्तिवृत्तिधर्म्मवद्विभक्तिकत्वरूपतृतीयसम्बन्धस्यापि वैशिष्ट्यघटकत्वेन प्रवेशात्। प्रकृते क्विपोनुसन्धानेन तद्व्यवधानात् तृतीयसम्बन्धस्याभावेनादोषात्।

नन्वेवं मैथिली दारा इत्यादौ दारपदोत्तरविभक्त्यर्थसंख्याया अविवक्षया प्रतियोगितावच्छेदकसम्बन्धाभावेनाभावरूपसम्बन्धसहितसम्बन्धत्रयस्य सत्त्वेन मैथिलीपदस्य दारपदविशिष्टत्वात्समानवचनत्वनियमापत्तिरिति चेत्—न। मैथिलीपदोत्तरविभक्त्यैकत्वस्य विवक्षितत्वेन स्वोत्तरविभक्तितात्पर्य्यविषयसंख्याविरुद्धत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्संख्या-विवक्षाविषयविभक्तिप्रकृतित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावस्य निवेशेनादोषात्। न च दारपदस्य विशेषणवाचकत्वे समानवचनत्वापत्तिस्तदुत्तरविभक्त्या संख्याया अविवक्षितत्वादिति वाच्यं, उक्तसम्बन्धत्रयेण विशेष्यवाचकपदविशिष्टं नियतवचनातिरिक्तं पदं विशेष्यबोधकपदसमानवचनमिति स्वीकारात्। नियतवचनत्वञ्च एकवचनत्वद्विवचनत्वबहुवचनत्वान्यतमधर्मव्याप्यविषयताप्रयोजकत्वम्। व्याप्यतावच्छेदकसम्बन्धश्च

प्रयोजकत्वरूपः । व्यापकतावच्छेदकश्च स्वाश्रयाव्यवहितपूर्वत्वसम्बन्धः । प्रकृते दारत्वरूपानुपूर्व्यवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावती स्त्रीत्वावच्छिन्ना विषयता बहुवचनत्वरूपधर्मव्याप्या । यत्र यत्र प्रयोजकत्वसम्बन्धेन स्त्रीत्वावच्छिन्ना दारत्वरूपाऽऽनुपूर्व्यवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावती विषयता तत्र तत्र स्वाश्रयाव्यवहितपूर्वत्वसम्बन्धेन बहुवचनत्वमिति व्याप्तेः सत्त्वात् । तत्प्रयोजकत्वञ्च दारपदे इति तस्य नियतवचनत्वान्न समानवचनत्वम् ।

नन्वेवमेकत्वबोधकत्वेनाविवक्षिता जात्येकत्वबोधकत्वेन विवक्षिता वा या विभक्तिस्तदन्तविशेष्यवाचकपदघटितस्य द्वौ पुरुषः त्रयः पुरुषः इति वाक्यस्यापि साधुत्वापत्तिः । द्विशब्दत्रिशब्दयोर्नियतवचनत्वेन समानवचनत्वनियमाप्रसक्तेरिति चेत्—अत्रोच्यते । स्वविशिष्टं पदं स्वसमानवचनम् । वैशिष्ट्यञ्च स्वप्रयोज्यविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वस्वाव्यवहितोत्तरविभक्तिवृत्तिप्रत्ययत्ववद्विभक्तिप्रकृतित्वस्वाव्यवहितोत्तरविभक्तितात्पर्य्यविषयसंख्याविरुद्धसंख्याबोधकत्वतात्पर्य्यविषयविभक्तिप्रकृतित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्वोत्तरविभक्तिवाच्यसंख्यावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगिधर्मावच्छिन्नबोधकत्वतात्पर्य्यविषयत्वस्वोत्तरविभक्तिसमानानुपूर्वीकविभक्तिप्रकृतित्वप्रकारकसम्भावनाप्रयोज्यसाधुत्वप्रकारकसम्भावनाविषयत्वाभाववत्त्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वैतच्चतुष्टयसम्बन्धेन । मैथिली दारा इत्यादौ दारपदं प्रकारताप्रयोजकम् । तत्र विशेष्यवाचकमैथिलीपदविशिष्टत्वं नास्ति । यत आद्यसम्बन्धत्रयसत्त्वेऽपि चतुर्थसम्बन्धो नास्ति । यतोऽभावप्रतियोगितावच्छेदकसम्बन्धद्वयमेवास्ति । तथा हि विशेष्यवाचकमैथिलीपदोत्तरविभक्तिस्सुस्तद्वाच्यैकत्वसंख्यावच्छिन्नानुयोगितानिरूपकपर्य्याप्तिप्रतियोगिभूतो धर्मो दारत्वन्तस्य प्रत्येकपर्य्याप्तत्वात् तदवच्छिन्नबोधकत्वेन तात्पर्य्यविषयत्वं दारपदे । एवं स्वोत्तरा विभक्तिः सुस्तत्समानानुपूर्वीकसुविभक्तिप्रकृतित्वप्रकारकसम्भावनाप्रयोज्या यद्ययं दारशब्दः सुविभक्तिप्रकृतिस्स्यात्तदा

साधुः स्यादिति सम्भावना । सा च नास्तीतिताहशसम्भावनाविषयत्वाभाववत्वसम्बन्धश्च दारपदेऽस्तीति न समानवचनत्वापत्तिः । द्वौ पुरुषस्त्रयः पुरुष इत्यादयश्च न प्रयोगास्तत्रोक्तचतुष्टयसम्बन्धेन विशेषणवाचकद्व्यादिपदे पुरुषपदवैशिष्ट्यसत्त्वेन समानवचनत्वनियमाक्रान्तत्वाच्चतुर्थसम्बन्धघटकीभूतप्रतियोगितावच्छेदकप्रथमसम्बन्धस्य तत्राभावेन चतुर्थसम्बन्धस्यापि सत्त्वात् । तथा हि पुरुषपदोत्तरसुविभक्तिवाच्यैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वस्य द्वित्वादौ बाधेन तद्घटितः सम्बन्धो नास्तीति सर्वमुपपन्नम् । न च पुष्पवन्तौ देव इत्यस्यानिस्तारः । पुष्पवन्तपदवाच्यतावच्छेदकस्य सूर्य्यत्वादेरेकत्व वच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वेन दारपदसमानत्वादिति वाच्यं, ताहशपर्य्याप्तिप्रतियोगिधर्मविशिष्टत्वस्य निवेशनीयत्वात् । वैशिष्ट्यं स्वावच्छिन्नबोधकत्वेन तात्पर्य्यविषयत्वस्वपर्य्याप्त्यावच्छेदकतानिरूपितावच्छेद्यतावती या शक्यता तन्निरूपितशक्ततावत्त्वोभयसम्बन्धेन पुष्पदन्तपदशक्यतायाश्च सूर्यचन्द्रत्वत्वोभयपर्याप्तत्वात् । स्वप्रयोज्येत्यादिनिवेशात् स्तोकं सुन्दरौ पचावित्यादौ न दोषः । द्वितीयसम्बन्धनिवेशात् स्तोकं पचावित्यादौ न दोषः । तृतीयस्य निवेशेन सुन्दरा दारा इत्यादौ दोषाभावः । चतुर्थस्य निवेशेन मैथिली दारा इत्यादावदोषः । तत्रापि प्रथमस्य प्रतियोगितावच्छेदकस्य निवेशेन द्वौ पुरुष इत्यादौ न दोषः । द्वितीयस्य प्रतियोगितावच्छेदकस्य निवेशेन निलौ घट इति प्रयोगाभावः ।

ननु शतं ब्राह्मणा इत्यादौ समानवचनत्वापत्तिरुक्तचतुष्टयसम्बन्धेन शतपदस्य विशेष्यवाचकब्राह्मणपदविशिष्टत्वात् । न च विशेषणवाचकशतपदोत्तरविभक्त्यैकत्वस्य विवक्षितत्वान्न दोष इति वाच्यं, एकत्वाविवक्षायां शतानि ब्राह्मणा इति प्रयोगापत्तेर्दुर्वारत्वात् । न चैकत्वाविवक्षायान्ताहशप्रयोगस्येष्टत्वमेवेति वाच्यं, 'विंशत्याद्याः सदैकत्व' इत्याद्यनुशासनेनैकवचनान्तानामेव विंशत्यादिशब्दानां साधुत्वबोधनात् इति चेत्-अत्रोच्यते । विंशत्यादिपदोत्तरविभक्त्या प्रकृत्यर्थतावच्छेदकगतैव संख्या प्रती-

वोमाद्रवसौ विश्वेदेवा इत्यादौ द्वित्वविशिष्टयोः पुरूरवोमाद्रवःप्रभृत्योर्विशेषणतया विवक्षितत्वात्तद्वाचकस्य द्विवचनान्तता । वेदाः प्रमाणमित्यत्र च विशेषणपदोत्तरविभक्त्या बहुत्वविरुद्धमेकत्वं

---

यते । तथा च विंशतित्वादीनामेकत्वादेकवचनान्ता एव विंशत्यादिशब्दास्साधवः । अत्रैव विंशत्याद्या इत्यनुशासनतात्पर्य्यमत एव विंशतित्वशतत्वादौ द्वित्वादिसत्त्वे द्वे विंशती त्रीणि शतानीत्यादयः प्रयोगा उपपन्नाः। तदनुशासनेन विंशत्यादिशब्दानामेकवचनान्तानामेव साधुत्वबोधने तु तेषामसाधुत्वापत्तेः । तस्मादेकत्वाविवक्षायामेकशतेऽपि शतानि ब्राह्मणा इत्याद्या इष्यन्त एवेति तत्त्वम् । विशेषणवाचकपदे विंशत्यादिसंख्यावाचकातिरिक्तत्वस्य निवेशो वा बोध्यः ।

नन्वेवं 'मैथिली तस्य दारा' इतिवत् साधुत्वेन प्रतीतस्य रुक्मिणीसत्यभामे कृष्णस्य दारा इत्यस्य साधुत्वानापत्तेः । विशेष्यवाचकरुक्मिणीसत्यभामपदोत्तरविभक्तिवाच्यद्वित्वसंख्याया दारत्वप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकत्वात् । त्रयः पुरुष इत्यादेरिव तस्य समानवचनत्वनियमाक्रान्तत्वादिति चेत्-अत्रोच्यते । वाच्यत्वघटितसम्बन्धस्थाने स्वोत्तरविभक्तिवाच्यसंख्याविशिष्टधर्म्मावच्छिन्नबोधकत्वस्य निवेशः । वैशिष्ट्यञ्च स्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वस्वन्यूनसंख्यावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वान्यतरसम्बन्धेन । तथा च नापत्तिर्दारत्वस्य द्वित्वन्यूनसंख्यावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वादिति दिक् ।

द्वित्वविशिष्टयोः पुरूरवोमाद्रवःप्रभृत्योरिति । पुरूरवःपदं पुरूरवोघटितसमुदायपरम् । माद्रवःपदं तद्घटितसमुदायपरम् । विशेषणवाचकपदोत्तरविभक्त्या द्वित्वं विवक्षितमिति समानवचनत्वाभावः । वेदाः प्रमाणमित्यादौ समानवचनत्वाभावमुपपादयति-वेदाः प्रमाणमित्यत्र चेति। एकत्वं विवक्षितमिति । नन्वेकत्वं प्रकृत्यर्थे प्रमाणे बाधितन्तस्य बहुत्वादि-

विवक्षितं तच्च प्रकृत्यर्थतावच्छेदके प्रमितिकरणत्वेऽन्वेति । शाब्द-प्रमाकरणत्वं च शब्दत्वावच्छिन्नं यावच्छब्दनिष्ठमेकमेवेति नायोग्यता । न च पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिविरोधः संपन्नो

---

स्यत आह-तच्चेति । एकत्वञ्चेत्यर्थः । शब्दत्वावच्छिन्नेति । अवच्छेदकस्य शब्दत्वस्यैकत्वात्तदवच्छिन्नस्य करणत्वस्याप्येकत्वेन तत्र तस्याबाधात् । ननु शाब्दप्रमाकरणत्वमित्यस्य शाब्दत्वविशिष्टप्रमात्वावच्छिन्नकार्यतानिरूपितकारणत्वमित्यर्थो न सम्भवति । शब्दत्वावच्छिन्नकारणतानिरूपितकार्य्यताया भ्रमात्मकशाब्दबोधसाधारणतया तदपेक्षया शाब्दप्रमात्वस्य न्यूनवृत्तित्वेन तादृशकार्य्यतावच्छेदकत्वासम्भवात् । प्रमात्वस्य च वस्तुसद्भावाधीनतया शब्दजन्यतावच्छेदकत्वे मानाभावाच्च स्वजन्यकार्य्ये स्वप्रयोज्यस्यैव स्वजन्यतावच्छेदकत्वौचित्यात् । नापि शाब्दप्रमानिष्ठकार्य्यतानिरूपितेत्याद्यर्थः । सा च कार्यता शाब्दत्वावच्छिन्नैव स्यात्तस्या भ्रमप्रमासाधारणेन वह्निना सिञ्चतीतिवाक्यजन्यभ्रमात्मकज्ञानेऽपि सत्त्वेन तन्निरूपितकारणतावति वह्निना सिञ्चतीतिवाक्येऽपि प्रमाणमिति व्यवहारापत्तेरिति चेत्-अत्रोच्यते । शाब्दत्वावच्छिन्नकार्य्यतायाः शब्दत्वावच्छिन्नकारणतानिरूपिताया भ्रमप्रमासाधारण्येऽपि प्रमावृत्तित्वविशिष्टायास्तस्याः प्रमायामेव स्थितिरितिवत्तन्निरूपितकारणताया अपि प्रमाजनकवाक्ये एव स्थितिरिति मन्यते । तथा च शब्दप्रमाकरणत्वमित्यस्य शाब्दत्वावच्छिन्नप्रमावृत्तित्वविशिष्टकार्य्यतानिरूपितकारणत्वमित्यर्थः । तथा च न भ्रमजनके वह्निना सिञ्चतीति वाक्ये प्रमाणत्वव्यवहार इति दिक् ।

न च पदार्थः पदार्थेनेति । पदार्थः पदार्थेनान्वेति न पदार्थैकदेशेनेतिव्युत्पत्तेः स्वरूपम् । प्रकृते प्रमितिकरणत्वस्य प्रमाणपदार्थैकदेशतया तत्रैकत्वान्वयासम्भवो व्युत्पत्तिविरोधादिति भावः । एतस्या व्युत्पत्तेरङ्गीकारादेव घटत्वेऽभेदेन नित्यान्वयतात्पर्य्यकस्य नित्यो घट इति वाक्यस्य नापत्तिः ।

घटत्वस्य पदार्थैकदेशत्वे न तत्र नित्यान्वयस्य प्रकृतव्युत्पत्तिविरुद्धत्वात् । नन्वन्वयितावच्छेदकरूपेणोपस्थितपदार्थे एव पदार्थान्वयात् । स्वरूपत एव घटपदोपस्थिते घटत्वादावन्वयासम्भवेन नापत्तिरिति चेत्-न । जातित्वविशिष्टजातिमत्तातात्पर्य्यकतच्छब्दघटितस्य जातित्वावच्छिन्नेऽभेदेन नित्यान्वयबोधकस्य नित्यः स इति वाक्यस्य प्रामाण्यापत्तेः । अथैतद्व्युत्पत्तिमूलभूतः कार्य्यकारणभावोऽपि विचार्य्यते । किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन पदजन्योपस्थितिः कारणम् । घटत्वादौ विशेष्यतासम्बन्धेन घटपदजन्योपस्थितेरभावेन तत्र पदार्थान्तरान्वयाभावः । न च नित्यः स इत्यादौ जातावुपस्थितीयविशेष्यतायाः सत्त्वेन नित्यान्वयो दुर्वार इति वाच्यं, मुख्यविशेष्यताया एव कारणतावच्छेदकत्वाभ्युपगमात् । तस्यश्च जातित्वनिष्ठप्रकारतानिरूपितायांमाश्रयनिष्ठविशेष्यतानिरूपितप्रकारतासामानाधिकरण्येन प्रकारत्वासमानाधिकरणविशेष्यतात्वरूपमुख्यत्वासम्भवात् । न च घटादावपि घटवदर्थकतत्पदजन्योपस्थितीयप्रकारतायाः सत्त्वेन मुख्यविशेष्यतयोपस्थित्यभावेन नीलादेरन्वयानापत्त्या नीलो घट इत्यस्याप्यप्रमाणत्वापत्तिरिति वाच्यं, स्वनिरूपितत्वस्वनिरूपितप्रकारत्वासामानाधिकरण्योभयसम्बन्धेन स्वविशिष्टविशेष्यतासम्बन्धेनोपस्थितिः कारणमित्यभ्युपगमेन पदान्तरजन्योपस्थित्यन्तरीयप्रकारतायाः सत्त्वेऽप्यापत्तिविरहात् स्वमुपस्थितिः । अथैवमपि घटवान् तत्पदशक्यो घटो घटपदशक्य इति ज्ञानद्वयाधीनसमूहालम्बनोपस्थितिजन्यो नीलो घट इति बोधो न स्यात् । घटनिष्ठयोस्तदीयप्रकारताविशेष्यतयोस्सत्त्वेन मुख्यविशेष्यतयोपस्थितेर्घटेऽसत्त्वात् । अत्रोच्यते । स्वप्रयोज्यविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति स्वजन्योपस्थितिः स्वविशिष्टविशेष्यतासम्बन्धेन कारणम् । विशेष्यतायां वैशिष्ट्यं स्वजन्यतावच्छेदकत्वस्वजन्यतावच्छेदकप्रकारत्वासामानाधिकरण्योभयसम्बन्धेनेति न दोषः । न च लाङ्गूले पशुपदप्रयोज्या या तत्पदप्रयोज्यलोमनिष्ठप्रकारतानिरूपितविशेष्यता तद्रूपसम्बन्धेन शाब्दबोधो न स्यात् । पशुपदजन्योप-

स्थितेरुक्तसम्बन्धेनाभावादिति वाच्यम् । कार्य्यतावच्छेदकीभूतविशेष्यतायां स्वेतरपदप्रयोज्यप्रकारतानिरूपितत्वस्यापि निवेशेनादोषात् । तस्याश्च पशुपदप्रयोज्यस्यैव लोमनिष्ठप्रकारतया निरूपितत्वात् । नन्वेवं देवदत्तस्य गुरुरित्यादौ गुरुत्वे गुरुपदप्रयोज्योपस्थितीया गुरुत्वत्वनिष्ठप्रकारतानिरूपिताविशेष्यता यद्यप्यस्ति परन्तु तस्यां गुरुनिष्ठविशेष्यतानिरूपितप्रकारतासामानाधिकरण्यस्यैव सत्त्वेन गुरुत्वे निरूपितत्वसम्बन्धेनेष्टस्य देवदत्तान्वयस्यानापत्तिरिति चेत्—न । कारणतावच्छेदकीभूतविशेष्यतायां नित्यसाकाङ्क्षावृत्तित्वस्य निवेशनीयत्वात् । गुरुत्वादिकञ्च नित्यसाकाङ्क्षम् । तत्त्वञ्च स्वानिरूपकाकाङ्क्षाव्याप्यज्ञानविषयत्वम् । स्वञ्च गुरुत्वादिकम् । ततश्च प्रकृतशाब्दबोधीयविशेष्यताया गुरुत्वनिष्ठायाः प्रकृतकार्य्यतानवच्छेदकत्वान्नापत्तिः । नन्वेवमपि अगुरुपदार्थस्याभेदेन गुरुत्वपदार्थेऽन्वयतात्पर्येण गुरुरगुरुरित्यापद्येत । नित्यसाकाङ्क्षतया गुरुत्वनिष्ठाया आपाद्यमानशाब्दबोधीयविषयतायाः कार्य्यतावच्छेदकसंसर्गत्वाभावादिति चेत्—न । प्रकारतानिरूपितत्वस्थाने प्रकारताविशिष्टत्वस्य निवेशनीयत्वात् । वैशिष्ट्यञ्च स्वनिरूपितत्वस्वाश्रयनिरूपितत्वाभाववद्वृत्तित्वोभयसम्बन्धेन देवदत्तस्य गुरुरित्यादौ देवदत्तनिष्ठप्रकारतायाः स्वनिरूपितत्वेऽपि स्वाश्रयदेवदत्तनिरूपितगुरुत्ववृत्तित्वस्यैव विशेष्यतायां सत्त्वेन वैशिष्ट्याभावेनागुरुपदार्थनिष्ठप्रकारतायाः स्वाश्रयागुरुनिरूपितत्वाभाववद्गुरुत्ववृत्तित्वस्वनिरूपितत्वोभयसम्बन्धेन गुरुत्वनिष्ठविशेष्यतायां वैशिष्ट्यस्य सत्त्वेन च नोभयत्र दोषः । प्रकृत्या चारुरित्यादौ चारुत्वे चारुपदार्थविशेषणीभूते प्रकृतेरभेदेन संसर्गेणान्वयः कथम् । तत्र निरुक्तसम्बन्धेनोपस्थितेरभावादिति चेत्-अत्रोच्यते । प्रकृत्यादिगणनिष्पन्नतृतीयार्थाभेदस्य प्रकारतयैव भानम् । ततश्च संसर्गघटकप्रकारतायां विभक्त्यप्रयोज्यत्वं निवेश्यते । प्रकृतेऽभेदनिष्ठप्रकारतायां विभक्तिप्रयोज्यत्वस्यैव सत्त्वेन कार्य्यतावच्छेदकसंसर्गाभावाददोषोऽत एव सम्पन्नो व्रीहिरित्यादौ व्रीहौ बहुत्वरूपसम्पत्तिविशिष्टे एकत्वान्वयस्य बाधेन व्रीहित्वे विभक्त्यर्थैकत्वस्यान्वयेऽपि

व्रीहिरित्यनेकव्रीहितात्पर्यकेऽप्येकवचनदर्शनेन तादृशव्युत्पत्तिसङ्कोचस्यावश्यकत्वात्। यदि च स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्व सम्बन्धेन प्रकृत्यर्थं एवैकत्वान्वयः, व्रीहित्वजातेः स्वरूपत एव व्रीह्यादिपदशक्यतावच्छेदकतयाऽन्वयितावच्छेदकरूपेणानुपस्थितेस्तत्र पदार्थान्तरस्यान्वयानुपपत्तेरिति मन्यते, तदा प्रकृतेऽपीदृश्येव गतिः। यत्तु संपन्नो व्रीहिरित्यादावेकवचनोपस्थितानि नानैकत्वानि प्रत्येकं नानाव्रीहिष्वन्वीयन्ते इत्युक्त्यैव सामञ्जस्ये जातावेकत्वभानोपगमो निरर्थक इति। तदसत्। यतः स्वसजातीयनिष्ठभेदप्रति-

---

व्यभिचाराभावः। एकत्वनिष्ठप्रकारताया विभक्तिप्रयोज्यत्वात्। एवञ्च वेदाः प्रमाणमित्यादौ प्रमाकरणत्वे एकत्वान्वयोऽप्युपपद्यते। समानधर्मावच्छिन्नविशेष्यताकनिश्चयस्यैव विरोधिज्ञानप्रतिबन्धकतया तस्यैव प्रवृत्तिनिवृत्तिप्रयोजकतया निरवच्छिन्नविशेष्यताकेतरपदार्थप्रकारकशाब्दबोधस्यानुपयोगेनानभ्युपगमात् स्वरूपत उपस्थिते व्रीहित्वे एकत्वान्वयो न सम्भवतीत्य आह--यदि चेत्यादि। स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वेति। स्वमेकत्वन्तदाश्रयः प्रकृत्यर्थतावच्छेदकं व्रीहित्वं तद्वत्त्वं व्रीहौ सम्बन्धः।

अन्वयितावच्छेदकरूपेणेति। ननु प्रकृतान्वयिता एकत्वनिष्ठप्रकारतानिरूपिता विशेष्यतैव। तदवच्छेदकञ्च न किमपि व्रीहित्वस्यानुपस्थितत्वादन्यस्य कस्य चिदसम्भवात् प्रकृतान्वयितावच्छेदकरूपमप्रसिद्धमिति चेदन्वयितावच्छेदकतया सम्भावितं यद्रूपं व्रीहित्वत्वन्तद्रूपेणेत्यर्थेनाप्रसिद्ध्यभावात्। प्रकृतेऽपीति। वेदाः प्रमाणमित्यत्रापीत्यर्थः। ईदृश्येवेति। स्वाश्रयप्रमितिकरणत्ववत्त्वसम्बन्धेन प्रमाण एवैकत्वान्वय इत्यर्थः। तथा च न तदर्थं व्युत्पत्तिसंकोच इति भावः।

स्वसजातीयनिष्ठेत्यादि। यत्रैकत्वान्वयो विवक्षितस्तत्र स्वसजातीयरहितत्वमेवैकत्वं विभक्तिप्रतिपाद्यम्। स्वमत्र घटादिः। ननु यत्र सजातीयो

योगितानवच्छेदकैकत्वरूपसजातीयद्वितीयरहितत्वमेकवचनार्थः न त्वेकत्वमात्रम्। तस्य वस्तुमात्रसाधारण्येनार्थत एव लाभात्। अनुपयोगाच्च। अत एव पशुना यजेत इत्यादौ पशुनिष्ठतादृशैकत्वस्य विवक्षितत्वादनेकपशुकरणकयागान्नादृष्टसिद्धिः। साजात्यं च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वरूपेण। अतोऽत्र घटोऽस्तीत्यादौ घटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वा-

---

द्वितीयोऽस्ति तत्राप्यपरस्मिन् घटादौ तद्द्वितीयाभावरूपं रहितत्वं वर्त्तत एवान्यस्य रहितत्वस्य वर्णयितुमशक्यत्वादित्यतः स्वयमेव परिष्करोति-स्वसजातीयनिष्ठेत्यादिना। स्वसजातीयत्वं स्ववृत्तिधर्म्मवत्त्वम्। तत्र स्वं घटादिस्तद्वृत्तिर्धर्म्मः क इति जिज्ञासायामाह-साजात्यञ्चेति। स्वसमभिव्याहृतपदार्थेत्यादि। स्वं यदर्थं एकत्वं वर्ण्यते तदेकवचनं स्वादिः। तत्समभिव्याहृतन्तद्घटितवाक्यघटकं पदमत्र घटोऽस्तीत्यादौ-अत्रेत्यादि। तदर्थं एतद्देशविद्यमानत्वादिस्तत्संसर्गः स्वरूपादिः। प्रकृत्यर्थतावच्छेदकञ्च घटत्वादिः। तथा चात्र घटोऽस्तीत्यादौ स्वर्थैकत्वं घटे प्रतीयते तच्चैकत्वं घटे किमित्याकाङ्क्षायां घटवृत्तयो ये धर्म्माः सुप्रकृत्यर्थतावच्छेदकं घटत्वं सुसमभिव्याहृतपदार्थैतद्देशविद्यमानत्वादिस्वरूपादिसंसर्गाश्च तद्वत्त्वम्। यदि तस्मिन् देशे द्वितीयो घटोऽस्ति तदा तत्र तन्निष्ठो भेद एतद्घटगतैकत्ववान्नेत्याकारकस्तत्प्रतियोगितावच्छेदकमेव तदेकत्वम्। यदि तत्र द्वितीयो नास्ति तदा स्वयमेव स्वसजातीयस्तन्निष्ठस्तद्गतैकत्ववान्नेत्याकारको भेदो नास्ति। किन्तु देशान्तरीयघटादिनिष्ठैकत्ववान्नेत्याकारक एव तत्प्रतियोगितानवच्छेदकमेतद्देशस्थघटगतमेकत्वमिति तदेकवचनप्रतिपाद्यमिति निष्कर्षः।

ननु यद्येतद्देशे एको घटो ब्राह्मणस्यापरश्च शूद्रस्य तदाऽत्र ब्राह्मणस्य घटोऽस्तीति प्रयोगो न स्यादेतद्घटवृत्तिर्यः प्रकृत्यर्थतावच्छेदकघटत्वं सुसमभिव्याहृतपदार्थैतद्देशविद्यमानत्वसंसर्गश्च तद्वत्त्वमपरस्मिन् शूद्रघटे तन्निष्ठभेदप्रतियोगितावच्छेदकत्वमेव ब्राह्मणघटगतैकत्व इत्येकवचनप्रयोगोऽसंगत

इति चेत्-न । यावत्स्वसमभिव्याहृतपदार्थसंसर्गस्य विवक्षितत्वात् । प्रकृते ब्राह्मणस्य घटे ब्राह्मणसंसर्गोऽस्ति स शूद्रघटे नास्तीत्यदोषः । न च स्वस्वामिभावस्यासत्त्वेऽपि कालिकादिसंसर्गोऽस्त्येवेति वाच्यं, शाब्दबोधविषयसंसर्गस्यैव विवक्षितत्वेन कालिकादिसम्बन्धसत्तया अकिञ्चित्करत्वात् । न च कस्मिंश्चिच्छाब्दबोधे कालिकादेरपि विषयत्वसम्भवात्तस्य च प्रकृते सत्त्वाद्दोष एवेति वाच्यं, प्रकृतशाब्दबोधविषयताया एवापेक्षितत्वात् । कालिकसम्बन्धेन देवदत्तविशिष्टो यज्ञदत्तः अत्र घटोऽस्तीतिवाक्यद्वयजन्यसमूहालम्बनबोधमादाय तस्या अपि तत्र सम्भवादिति चेत् । स्ववृत्तयो यावन्तः सुसमभिव्याहृतपदार्थसंसर्गास्तेषां सर्वेषां सत्ताया अपेक्षितत्वात् । प्रकृते कालिकादेर्ब्राह्मणसंसर्गस्य शूद्रघटे सत्त्वेऽपि स्वस्वामिभावरूपस्यैतद्घटे वर्त्तमानस्य ब्राह्मणसम्बन्धस्य शूद्रघटेऽसत्त्वेन यावत्संसर्गाभावेनादोषः । पशुना यजेतेत्यनेनैकत्वविशिष्टपशुकरणके यागे इष्टजनकत्वं बोध्यते । तत्र पशुसजातीयो द्वितीयो नास्ति किन्तु स्वयमेव स्वसजातीयस्तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वं तद्गतैकत्वेऽस्तीति समन्वयः । पशुद्वयकरणकयागे च नानया श्रुत्याऽदृष्टजनकत्वं बोध्यते तत्रैकत्वविशिष्टपशुकरणकयागत्वरूपोद्देश्यतावच्छेदकानाक्रान्तत्वात् । तद्यागीयद्वितीयपशोरपरपशुसजातीयस्य सत्त्वेन एकत्वविशिष्टपशोरभावात् । ननु सर्वस्यैकत्वविशिष्टपशुकरणकयागस्यानयाऽदृष्टजनकत्वबोधनाय सर्वस्तादृशो याग एतद्यज्धातुरूपपदार्थः । तत्संसर्गस्य पशुत्वरूपप्रकृत्यर्थतावच्छेदकस्य च यागान्तरीयपशौ सत्त्वात्स एव एतद्यागीयपशुसजातीयस्तद्रहितत्वमेतत्पशौ नास्तीति कथमेकत्वविशिष्टपशुकरणको यागः प्रसिद्ध इति चेत् — न । एतत्पशुवृत्तिरेतद्यागव्यक्तिसंसर्गस्य च यागान्तरीयसंसर्गवति पशौ नास्तीति तस्यैतत्सजातीयत्वाभावात् । एवं नरेण नरो यजेतेत्यादावपि करणभूतनरसजातीयत्वं कर्तृभूतनरे तत्सजातीयत्वन्तस्मिन् वा नरे नास्ति करणभूतनरे यागस्य करणत्वं संसर्गस्य च कर्त्तरि नरे नास्ति । तस्मिन् नरे यागस्य कर्त्तृत्वं संसर्गस्य च करणभूते तस्मिन् नास्तीत्यतः स्ववृत्तिसंसर्गवत्त्वस्यान्यत्राभावात् किन्तु

स्वयमेव स्वसजातीयान्तरनिष्ठभेदप्रतियोगितानवच्छेदकत्वस्य तद्गतैकत्वे सत्त्वेनोभयत्रैकवचनोपपत्तिः न च बहुब्राह्मणकर्तृकशयनाधिकरणस्थानतात्पर्य्येणात्र ब्राह्मणः शेते इत्यापद्येत। कर्तृभेदेन शयनक्रियाया भेदादेकब्राह्मणवृत्तिर्यः शयनक्रियाव्यक्तिसम्बन्धः स ब्राह्मणान्तरे नास्तीति स्वसजातीयत्वं स्वस्मिन्नेव तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वस्य तदेकत्वे सत्त्वादिति वाच्यं, पदार्थसंसर्गित्वमित्यत्रत्यपदार्थपदेन पदार्थतावच्छेदकस्य ग्रहणेनादोषात्। तथा च ब्राह्मणे यः शयनत्वरूपपदार्थतावच्छेदकस्य सम्बन्धः स्वावच्छिन्ननिरूपितकर्तृत्वरूपस्तस्यैव ब्राह्मणान्तरे सत्त्वेनैतद्ब्राह्मणसजातीयो द्वितीयो ब्राह्मणस्तद्रहितत्वाभावेनैकवचनोपपत्त्यभावात्।

अथैवं सति पशुना यजेतेत्यत्र दोष एव। तत्राप्येतत्पशुनिष्ठो यो यागत्वरूपपदार्थतावच्छेदकसम्बन्धः स्वावच्छिन्ननिरूपितकरणत्वरूपस्तस्यैव यागान्तरीयपशावपि सत्त्वेन तस्याप्येतत्पशुसजातीयत्वेन तद्रहितत्वाभावादिति चेत्—सत्यम्। अत्र यज्धातोर्य्यागत्वोपलक्षिततत्तद्व्यक्तित्वावच्छिन्ने लक्षणा। ततश्चैतद्यागीयपशौ यो यज्पदार्थतावच्छेदकतद्व्यक्तित्वसम्बन्धस्तस्य यागान्तरीयपशावभावात् तत्र हि भिन्नतद्व्यक्तित्वस्य स्वावच्छिन्नकरणत्वसम्बन्ध इति यागान्तरीयपशोरेतत्पशुसाजात्याभावेन दोषानवकाशात्।

केचित्तु पदार्थपदं पदजन्योपस्थितिमुख्यविशेष्यपरमेव। यज्धातुर्यागत्वावच्छिन्नपर एव। बहुब्राह्मणकर्तृकशयनस्थले अत्र ब्राह्मणः शेते इतीष्यते एव। न चैवं सति बहुघटसत्त्वदशायामत्र घटोऽस्तीति वाक्यन्तु जात्येकत्वादेव समर्थनीयमिति ग्रन्थसङ्गतिर्बहुब्राह्मणकर्तृकशयनदशायामत्र ब्राह्मणः शेते इत्यस्येवास्यापि व्यक्त्यैकत्वपरतयाऽपि साधुत्वोपपादनसम्भवादिति वाच्यं, अत्र घटोऽस्तीत्यादौ घटत्वावच्छिन्नाधेयताया एवास्धात्वर्थसत्तारूपतया तस्या एकत्वेनात्र ब्राह्मणः शेते इत्यतो वैलक्षण्यसम्भवादित्याहुः। स्वविशिष्टमेकत्वमेकवचनार्थः। वैशिष्ट्यञ्च स्वाभाववत्त्वसम्बन्धेन। प्रतियोगितावच्छेदकसम्बन्धश्च स्वविशिष्टावच्छेदकतावत्त्व-

प्रसिद्धावपि न क्षतिः। एतद्देशविद्यमानघटनिष्ठभेदप्रतियोगितान-वच्छेदकैकत्वस्यैव तत्र बोधादिति तस्य च प्रसिद्धत्वात्। एतद्देशे बहु-

---

रूपः। तत्र वैशिष्ट्यं स्वप्रयोज्यप्रकारतावच्छेदकतया विवक्षितसंसर्गा-वच्छिन्नत्वस्वविशिष्टनिष्ठभेदप्रतियोगितानिरूपितत्वोभयसम्बन्धेन। तत्र वैशिष्ट्यं स्वप्रकृत्यर्थतावच्छेदकधर्म्मवत्त्वस्वविशिष्टसमुदायत्वावच्छिन्ना-धेयतानिरूपिताधिकरणतावत्त्वोभयसम्बन्धेन। समुदायत्वे वैशिष्ट्यं स्वप्र-कृत्यर्थनिष्ठाधिकरणतानिरूपिताधेयतावच्छेदकत्वस्वसमभिव्याहृतपदार्थसं-सर्गवृत्तित्वस्वसमभिव्याहृतपदार्थसंसर्गेतरावृत्तित्वस्वसमभिव्याहृतपदार्थसंस-र्गवृत्त्यभावाप्रतियोगित्वैतच्चतुष्टयसम्बन्धेनेति तत्त्वम्। संसर्गश्च स्वप्रयोज्य-शाब्दबोधीयविषयतया साक्षात्परम्परया निरूपितविषयताश्रयो ग्राह्यस्तेन प्रकृतशाब्दबोधाविषयसंसर्गमादाय नातिप्रसङ्गः। बहुविशेषणानां फलान्यु-क्तान्येवावशिष्टमुच्यते। सम्पन्नो व्रीहिरित्यादौ व्रीहित्वगतैकत्वे सजातीय-व्रीहिनिष्ठो यो व्रीहित्वगतैकत्ववान्नेत्याकारको भेदस्तत्प्रतियोगितावच्छेद-कत्वस्यैव सत्त्वेन कथन्तदेकवचनार्थ इति शङ्कावारणायावच्छेदकतायां स्वप्रयोज्यप्रकारतावच्छेदकेत्यादिनिवेशितम्। प्रकृतभेदीयप्रतियोगिता-वच्छेदकतायास्समवायसम्बन्धावच्छिन्नत्वेन स्वप्रयोज्यप्रकारताच्छेदकः स्वा-श्रयाश्रयत्वरूपस्तदवच्छिन्नत्वाभावात्। तत्र हि स्वार्थैकत्वस्य स्वाश्रया-श्रयत्वसम्बन्धेनैव व्रीहावन्वयेनापत्त्यभावः। स्वाश्रयाश्रयत्वसम्बन्धेन व्रीहित्वगतैकत्वविशिष्टभेदस्य च व्रीहावभावादिति दिक्। स्वसमभिव्या-हृतेत्यत्र स्वमेकवचनम्।

साजात्यनियामकतया प्रकृत्यर्थतावच्छेदकधर्म्ममात्रस्य ग्रहणे दोषमाह-अतोऽत्र घटोऽस्तीत्यादाविति। अतः स्वसमभिव्याहृतपदार्थसंसर्गित्व-निवेशादित्यर्थः। अन्यथा घटमात्रस्य सजातीयत्वादिति भावः। समभि-व्याहृतेत्यादिनिवेशलभ्यमाह—एतद्देशविद्यमानेत्यादि तादृशवाक्येति। अत्र

घटसत्त्वदशायां तादृशवाक्यप्रयोगस्तु जात्येकत्वादेव समर्थनीयः। यत्तु एकत्वाविवक्षायामपि भावाख्यातस्थले एकवचनस्य साधुत्वदर्शनात्संख्याया अविवक्षणेऽपि संपन्नो व्रीहिरित्यादावेकवचनोपपत्तेरलं जात्येकत्वपरतया तत्र समर्थनेनेति तदप्यकिञ्चित्करम्। भावाख्यातस्थले गत्यन्तरविरहेण विभक्तेर्निरर्थकत्वोपगमात्। तत्र च सार्थकत्वोपगमसम्भवे तत्परित्यागस्यानुचितत्वात्। सति तात्पर्ये तद्बोधस्यानुभविकत्वाच्चेति। एवं 'त्रयः समुदिता हेतु'रित्यत्र हेतुपदं कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नपरं तादृशसमुदायत्वान्वितमेकत्वमेकवचनार्थः। अत एव शक्त्यादीनां

---

घटोऽस्तीतिवाक्येत्यर्थः। एवं त्रयः समुदिता हेतुरित्यत्र हेतुपदमित्यादि। हेतुपदस्य प्रयोजकतावच्छेदकसमुदायत्वावच्छिन्ने लक्षणा काव्योत्पत्तिरिति तु पर्य्यवसितार्थकथनन्न तु लक्ष्यतावच्छेदककुक्षौ तस्य प्रवेशस्तदुद्भव इत्यनेनैव काव्योत्पत्तीत्यस्य लाभात्। प्रयोजकता च शक्तिनिपुणताऽभ्यासात्मके समुदाये काव्योत्पत्तिसमानाधिकरणाभावाप्रतियोगित्वरूपा। अत एव शक्त्यादीनामिति। शक्तिर्निपुणताऽभ्यासा इतिपदोपस्थिताः हेतुपदाच्च प्रयोजकतावच्छेदकसमुदायत्वावच्छिन्न उपस्थितस्तस्याभेदसम्बन्धेनेत्यर्थशक्त्यादावन्वयस्तदर्थैकदेशे समुदायत्वे स्वर्थैकत्वस्यान्वयस्तदुद्भवे इत्यस्य काव्योत्पत्तीत्यर्थस्तस्याश्च प्रयोजकतायां सप्तम्यर्थनिरूपितत्वसम्बन्धेनान्वयः। तथा च काव्योत्पत्तिनिरूपितप्रयोजकतावच्छेदकैकत्वविशिष्टसमुदायत्वावच्छिन्नाभिन्नाः शक्तिनिपुणताभ्यासा इति इतिहेतुस्तदुद्भव इति वाक्यात् त्रयः समुदिता हेतुरिति वाक्याच्च बोधः। समुदिता इति विवरणवाक्यघटकपदं हेतुपदस्योक्तार्थलाक्षणिकत्वं बोधयति। एवं च यथा दाहं प्रति तृणस्यारणेश्च मणेश्च स्वातन्त्र्येण कारणत्वं नैकसहायेनापरस्य तथैव काव्योत्पत्तौ शक्त्यादीनां प्रत्येकं कारणत्वमित्येव कुतो न काव्य-

त्रयाणां तृणारणिमणिन्यायेन हेतुत्वशङ्कानिरासः। तथा सत्येषामेकैकसमवधानदशायामपि कार्योत्पत्तेरावश्यकतया तत्तित्रयपर्याप्तसमुदायत्वस्य कार्योत्पत्तिप्रयोजकतानवच्छेदकतया तेषां त्रयाणां तथाविधैकसमुदायत्वाश्रयत्वानुपपत्तेः। एवं जात्याकृतिव्यक्तयः पदार्थ इत्यत्र त्रितयनिष्ठस्य पदशक्तिरूपपदार्थत्वस्यैकत्वं विवक्षितमिति तत्र

---

प्रकाशतात्पर्यमिति शङ्काया अनवकाशः। उक्तवाक्यार्थविरोधात्। प्रत्येकमन्यासहायेन कारणत्वे एकस्यापि शक्त्यादेः सत्त्वे कार्य्योत्पत्तेरावश्यकतया प्रत्येकं प्रयोजकतापर्य्याप्तिर्वक्तव्या। तथा च त्रितयपर्य्याप्तसमुदायत्वस्यातिप्रसक्तत्वेन तदनवच्छेदकतया तदवच्छेदकसमुदायत्वघटितोक्तवाक्यार्थविरोधः स्पष्ट एव।

ननु हेतुपदं शक्यार्थपरमेव कुतो न ग्रन्थकृत्तात्पर्य्यविषयीभूतन्तथा सति तृणारणिमणिन्यायेन हेतुताप्रसज्येतेति तु नाशङ्कनीयम्। दण्डादीनां घटं प्रतीवान्वयव्यतिरेकाभ्यामेव निर्णयसम्भवादिति चेत्—न। हेतोर्नानात्वात् शक्तित्वाद्यवच्छेदकभेदेन हेतुताया अपि नानात्वाच्च। स्वर्थैकत्वस्यान्वयासम्भवेनाविवक्षाया एव वक्तव्यतया त्रयः समुदिता हेतुरित्यत्रासमानवचनत्वानुपपत्तेरिति दिक्।

त्रितयनिष्ठस्येत्यादि। घटादिपदनिरूपिता शक्तिर्घटत्वादिजातिसमवायादिसम्बन्धघटादिव्यक्तिनिष्ठा एकैवेति। तत्रेति। तत्रैवैकत्वान्वय इति पदार्थे जात्यादावेकत्वबाधेऽपि न क्षतिः। न च घटादिपदशक्तिः का या जातिसम्बन्धव्यक्तिषु एका स्यात्। किञ्च पदशक्तिरित्यस्य कोऽर्थः? पदनिरूपिता पदनिष्ठा वा शक्तिः। शक्तेरीश्वरेच्छारूपत्वे ईश्वरनिष्ठायां तस्यां पदनिरूपितत्वनिष्ठत्वयोर्बाधात् जात्यादिनिष्ठत्वस्य बाधाच्चेति वाच्यम्। पदजन्यबोधविषयता शक्तिः। पदशक्तिरित्यस्य पदसम्बन्धिनी शक्तिरित्यर्थः। सम्बन्धश्च स्वजन्यबोधनिरूपितत्वरूपः। सा च निरुक्त-

विशेष्यपदस्य बहुवचनान्तत्वेऽपि विशेषणपदस्यैकवचनान्ततोपपत्तिः। प्रत्यक्षानुमाने'त्यादिसूत्रे प्रमाकरणत्वरूपप्रकृत्यर्थतावच्छेदकस्य प्रत्यक्षानुमानादिनिष्ठस्यैकताया बाधितत्वेनाविवक्षितत्वात्प्रमाणपदस्य बहुवचनान्ततेति। एवं पितरो देवता इत्यत्रापि पितृपिता-

---

विषयतारूपा शक्तिः स्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितेश्वरीयेच्छीयविशेष्यतावत्त्वसम्बन्धेन व्यक्तौ वर्त्तते स्वनिष्ठविशेष्यतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नप्रकारतावत्त्वसम्बन्धेन जातौ वर्त्तते स्वनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकसंसर्गघटकावच्छेदकतावच्छेदकत्वसम्बन्धेन समवायादौ वर्त्तत इति त्रितयनिष्ठत्वमपि तस्या उपपद्यते। एतेनेश्वरेच्छायाः शक्तित्वे ईश्वरेच्छायाः समूहालम्बनात्मिकाया एकस्या एव सत्त्वेन शक्तशक्यतावच्छेदकभेदेनापि शक्तिभेदानापत्तेः। तद्विषयतायास्तत्त्वे बोधादेरपि घटादिपदशक्यत्वापत्तेस्तस्यापि तदिच्छाविषयत्वात्तादृशविषयतानामेकत्वाभावाच्छक्तावप्येकत्वाभाव इत्यादिवदन्तोऽपास्ताः।

प्रमाकरणत्वरूपप्रकृत्यर्थतावच्छेदकस्येत्यादि। प्रत्यक्षप्रमाऽनुमानप्रमादीनां भिन्नत्वात्। तत्तत्करणतानाञ्च प्रत्यक्षादिनिष्ठानां प्रत्यक्षत्वानुमानत्वाद्यवच्छेदकभेदेन भिन्नत्वादिति भावः।

ननु प्रमेत्यनुगतप्रतीत्यनुरोधेन प्रमात्वस्यैकस्यावश्याभ्युपगन्तव्यत्वेन तत्रैवैकत्वान्वयाय विभक्त्यर्थैकत्वविवक्षाऽस्त्विति चेत्-न। प्रवृत्तिनिमित्ततदाश्रयान्यतरान्वितैकत्वबोधं प्रत्येव प्रकृतिप्रत्ययानुपूर्वीरूपस्याकाङ्क्षात्वाभ्युपगमेन प्रमात्वान्वितैकत्वबोधं प्रति प्रमाणमित्यस्य निराकाङ्क्षत्वेन तादृशबोधासम्भवेनैकत्वस्याविवक्षितत्वात्। पितरो देवता इत्यत्र त्यागोद्देश्यत्वमेव। देवतात्वञ्च पितृत्वपितामहत्वाद्यवच्छेदकभेदाद्भिन्नमिति न कुत्राप्येकत्वान्वययोग्यतेत्येकत्वस्याविवक्षया समानवचनत्वम्। पितृभ्यः स्वधेतिव्यवहारस्तु न प्रामाणिक इति भावः।

महत्त्वादिना पृथगेव त्यागोद्देश्यत्वरूपदेवतात्वम्। उद्देश्यतावच्छेदकभेदेनैव उद्देश्यताभेदात्। तत्र एकत्वस्याविवक्षया देवतापदस्य बहुवचनान्ततेति दिक्। स्वप्रकृतिकत्वं च स्वाव्यवहितोत्तरत्वेन प्रतिसन्धीयमानत्वम्। तेन दधि सुन्दरमित्यादौ विशेष्यपदानन्तरं विभक्तेरसत्त्वेऽपि न क्षतिः। तत्र विभक्तेरनुसन्धानं विना शाब्दबोधानुपगमात्। एवं तादृशविभक्तिसजातीयविभक्तिकत्वमपि तथाविधविभक्त्यव्यवहितपूर्ववर्तितया प्रतिसन्धीयमानत्वम्। तेन इदं दधीत्यादौ विशेषणपदानन्तरं विभक्तेरसत्त्वेऽपि न क्षतिः। अथ नीलस्य घट इत्यादावपि पदार्थोपस्थित्यादिकारणसमवधानसंभवात् कथन्न नीलघटाद्योरभेदान्वयबोधः। सामग्र्या कार्यजनने उक्तनियमभङ्गप्रसङ्गरूपबाधकस्याकिञ्चित्करत्वादिति चेत् तथाविधान्वयबोधौपयिकाकाङ्क्षाविरहात्। तथा हि तादृशान्वयबोधे प्रथमाविभक्त्यन्तघटादिपदसमभिव्याहृतप्रथमान्तनीलादि-

---

ननु 'विंशत्याद्या' इत्यादि तु प्रसङ्गादागतम्। प्रकृतन्तु स्वप्रकृतिकविभक्तिसजातीयेत्यादौ स्वप्रकृतिकत्वन्तदाह-स्वप्रकृतिकत्वञ्चेति। प्रतिसन्धीयमानत्वं ज्ञायमानत्वमित्यर्थः। तादृशेति। स्वप्रकृतिकेत्यर्थः तथाविधेति। स्वप्रकृतिकविभक्तिसजातीयेत्यर्थः। उक्तनियमभङ्गेति—समानविभक्तिकपदोपस्थापितयोरेवाभेदान्वय इति नियमेत्यर्थः। तथाविधेति। अभेदान्वयेत्यर्थः। बोधौपयिकेति। बोधजनकेत्यर्थः। सा चाकाङ्क्षा कीदृशीत्याकाङ्क्षायामाह-तथा हीति। तादृशान्वयबोध इति। अभेदसम्बन्धावच्छिन्ननीलत्वाद्यवच्छिन्नप्रकारतानिरूपितघटत्वाद्यवच्छिन्नविशेष्यताकशाब्दबोध इत्यर्थः। प्रथमा विभक्त्यन्तेत्यादि। इदन्तु वस्तुस्थितिमात्रन्न तु प्रथमात्वविभक्तित्वादिभिर्विभक्तेराकाङ्क्षाशरीरे प्रवेशः, उक्तधर्म्माज्ञानेऽपि घट इत्यादेरानुपूर्वीप्रकारेणैवाकाङ्क्षायां प्रवेशः। तथा च

नीलो घटो घटो नील इत्याद्यानुपूर्व्यवच्छिन्नविषयतानिरूपकज्ञानस्यैव शाब्दबोधजनकत्वम्। यत्रापि नीलश्चैत्रस्य घट इत्यादिवाक्यं प्रयुज्यते तत्रापि तथानुपूर्वीमद्वाक्यं कल्पयित्वैव शाब्दबोधः करणीयः। अत एवासत्तिरप्युपपद्यते। अन्यथा नीलोपस्थितिघटोपस्थित्योश्चैत्रोपस्थित्या व्यवधानादव्यवधानघटितायास्तस्या अभावेन शाब्दबोधानापत्तिः। नीलघट इत्यादिसमासस्थले नीलो घट इति समुदायगतानुपूर्व्या अभावेन व्यासस्थलीयाकाङ्क्षाया अभावेन शाब्दबोधानापत्त्या तत्स्थलीयानुपूर्वीज्ञानस्यापि पृथक् कारणत्वं वाच्यम्। एवमेव नीलौ घटौ, नीला घटा, नीलं घटं, नीलान् घटानित्यादिसमुदायगतानुपूर्वीज्ञानानामपि तत्तदानुपूर्वीप्रकारकत्वेनैव कारणत्वं वक्तव्यमेकरूपेण कारणताया वक्तुमशक्यत्वात्।

ननु नीलघटः, नीलघटौ, नीलघटा इत्यादिविभक्त्यन्तसमुदायपर्याप्तानुपूर्वीणां कारणतावच्छेदकत्वे समासस्थलेऽपि विभक्तीनां सप्तत्वेन तदन्तनिष्ठानुपूर्वीणामपि सप्तानां कारणतावच्छेदकत्वापेक्षया नीलघटत्वरूपानुपूर्वीप्रकारकज्ञानत्वेनैव सप्तानां कारणत्वे लाघवात्तथैव वक्तुं युक्तमत एव मूलेऽपि नीलपदाव्यवहितोत्तरघटपदत्वं घटपदाव्यवहितपूर्वनीलपदत्वमित्येवाकाङ्क्षासप्तविभक्त्यन्तनीलघटसमासस्थले उक्तमिति चेत्—सत्यम्। तस्यापि विभक्त्यन्तानुपूर्वीणां प्रवेश एव तात्पर्यं कथमन्यथा निर्विभक्तिकनीलघटेतिसमुदायात् शाब्दबोधाभावः। यथाश्रुतग्रन्थरीत्या नीलपदाव्यवहितोत्तरघटपदत्वादेस्तत्र सत्त्वेन शाब्दबोधापत्तेर्दुर्वारत्वात्।

ननु कीदृशस्तत्र शाब्दबोध आपाद्यते। न तावन्नीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताक इति वक्तुं शक्यते। तादृशशाब्दबोधस्याप्रसिद्धेस्तत्कारणरूपापादकस्याप्यप्रसिद्धेः। न च नीलो घट इत्यादौ नीलघट इत्यादौ च तादृशशाब्दबोधप्रसिद्धिरिति वाच्यं, तत्रैकत्वस्यापि विशेषणतया भानेन तन्नियामकविभक्तिपदजन्यैकत्वोपस्थितिघटपदाव्यवहितोत्तरसुपदत्वरूपानुपूर्वीज्ञानादेरपि कारणत्वेन तदभावेनापत्त्यभावादिति चेत्—अत्रोच्यते। नीलो घटो नीलघट इत्यादावेकत्वत्वावच्छिन्नविषयताघटितशाब्द-

पदत्वमेवासमस्तनीलघटपदाद्याकाङ्क्षा। समासस्थले च घटपदाद्यव्यवहितपूर्ववर्तिनीलादिपदत्वं नीलादिपदाव्यवहितोत्तरवर्तिघटादिपदत्वं वा आकाङ्क्षा। उक्तस्थले च तादृश्या एकस्या अप्या-

---

बोधत्वावच्छिन्नकार्य्यतानिरूपितकारणताया एवैकत्वोपस्थित्यादेः सत्त्वेनैकत्वत्वावच्छिन्नविषयत्वाघटितनीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दत्वावच्छिन्नकार्य्यापादने एकत्वोपस्थितेरनपेक्षणेनापत्तिसंभवः। न चापाद्यतावच्छेदकधर्मस्य निरुक्तशाब्दबोधे अधिकं प्रविष्टन्तु तद्धानिरितिरीत्या सत्त्वेऽपि तद्धर्म्मावच्छिन्नकार्य्यतानिरूपितकारणतायाः कुत्राप्यभावेनापादकासम्भव एवेति वाच्यम्। नीलपदाव्यवहितोत्तरघटपदत्वरूपमूलोक्ताकाङ्क्षाया एव तत्कारणीभूतायास्तत्रापादकत्वसम्भवादिति वाच्यम्। आपाद्यतावच्छेदकधर्म्मं प्रत्येकत्वादिविषयताघटितनीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वादेर्व्याप्यतया व्यापकधर्म्मावच्छिन्ने कार्य्ये जननीये व्याप्यधर्मावच्छिन्नकार्य्योत्पादकसामग्र्या अपेक्षिततया तस्याश्च घटपदाव्यवहितोत्तरसुपदत्वरूपानुपूर्वीरूपाकाङ्क्षाज्ञानादिघटिततया निर्विभक्तिकनीलघटेतिसमुदायादौ तदभावेनापत्त्यभाव इति दिक्। एवञ्च यादृशयादृशानुपूर्व्यवच्छिन्ने यादृशयादृशानुपूर्व्यवच्छिन्नसमभिव्याहृतत्वज्ञानाद्यादृशः शाब्दबोधो जायते तादृशतादृशानुपूर्व्यवच्छिन्नविषयतानिरूपिततादृशानुपूर्व्यवच्छिन्नसमभिव्याहृतत्वविषयतानिरूपकज्ञानं तादृशशाब्दबोधे कारणमिति निष्कर्षः।

उक्तस्थले चेति। नीलस्य घट इत्यादिस्थले चेत्यर्थः। तादृश्याः इति। प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वादिरूपाया इत्यर्थः।

ननु प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानान्नीलो घट इति वाक्याज्जायमानाभेदान्वयबोधे द्वितीयान्तनीलपदसमभिव्याहृतद्वितीयान्तघटपदत्वादिरूपाकाङ्क्षाया अभावात् तादृशाकाङ्क्षा-

काङ्क्षाया विरहान्नापत्तिः। कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशान्नोक्ताकाङ्क्षाज्ञानयोः परस्परबोधे व्यभिचारः।

---

ज्ञानान्नीलं घटमित्यादिवाक्याज्जायमानेऽभेदान्वयबोधे च प्रथमान्तनीलेत्यादिरूपाकाङ्क्षाया अभावात् 'तत्सत्त्वे तत्सत्ता तदभावे तदभाव' इत्यन्वयव्यतिरेकनिबन्धनकार्य्यकारणभावासम्भव इत्यत आह—कार्य्यतावच्छेदककोटावित्यादि। तथा च प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरजायमानाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणं, द्वितीयान्तनीलपदसमभिव्याहृतद्वितीयान्तघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरजायमानाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति द्वितीयान्तनीलपदसमभिव्याहृतद्वितीयान्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणमित्यादिक्रमेण यावदाकाङ्क्षाज्ञानं कार्य्यकारणभावः। तथा च व्यभिचाराभावः। एकस्मिन्नेव हि कार्य्ये नानाकारणसद्भावे तदुदय इति भावः।

ननु यत्र देवदत्तस्य प्रथमान्तनीलपदसमभिव्याहृतेत्याद्याकाङ्क्षाज्ञानं जातन्तदव्यवहितोत्तरक्षणे एव यज्ञदत्तस्य पूर्वक्षणोत्पन्नद्वितीयान्तनीलपदसमभिव्याहृतेत्याद्याकाङ्क्षाज्ञानात्तादृशाभेदान्वयबोधस्तत्र तादृशबोधे प्रथमान्तनीलेत्याद्याकाङ्क्षाज्ञानकार्य्यतावच्छेदकाक्रान्तिसत्त्वेन तादृशबोधाधिकरणे यज्ञदत्ते तदाकाङ्क्षाज्ञानाभावेन व्यभिचारोऽस्त्येवेति चेत्—मैवम्। अव्यवहितोत्तरत्वं विहाय स्वाव्यवहितोत्तरत्वस्वाधिकरणदेशवृत्तित्वोभयसम्बन्धेन ज्ञानस्य वैशिष्टयं बोधे निवेश्य तादृशबोधे द्वितीयसम्बन्धविरहेण तत्कार्य्यतावच्छेदकानाक्रान्ततयाऽऽपत्तेर्वारणसम्भवात्। न चोक्तोभयसम्बन्धेन स्वविशिष्टत्वमेव कार्य्यतावच्छेदकमस्तु। तथा सति कार्य्यतावच्छेदक-

कोटावित्युक्तिसूचितस्याभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वे कार्य्यतावच्छेदकत्वस्य वैयर्थ्यमिति वाच्यम्। चैत्रे प्रथमक्षणे प्रथमान्तेत्यादि किमप्याकाङ्क्षाज्ञानं जातम्। तदुत्तरक्षणे चैत्रमैत्रोभयत्र यज्ञदत्तीयापेक्षाबुद्ध्या द्वित्वसंख्योत्पन्ना। तत्र संख्यायां निरुक्ताकाङ्क्षाज्ञानवैशिष्ट्यरूपकार्य्यतावच्छेदकाक्रान्तिसत्त्वेन तस्याश्च तादृशाकाङ्क्षाज्ञानशून्ये मैत्रेऽप्युत्पत्त्या व्यभिचारप्रसक्तेर्वारणायाभेदसम्बन्धावच्छिन्नेत्यादिप्रवेशावश्यकत्वात्। न च तावताऽपि स्वविशिष्टशाब्दबुद्धित्वमेव कार्य्यतावच्छेदकमस्तु। विषयताविशेषनिवेशो व्यर्थ एव। तदाकाङ्क्षाज्ञानोत्तरे अन्यादृशेऽपि जायमाने शाब्दबोधे तदाकाङ्क्षाज्ञानस्य कारणत्वे इष्टापत्तेरिति वाच्यम्। यत्र नीलो घटः घटवद्भूतलमिति समूहालम्बनमाकाङ्क्षाज्ञानं नीलो घट इत्यंशेऽप्रामाण्यज्ञानास्कन्दितं तत्र घटवद्भूतलमिति बोधो जायते न तु नीलाभिन्नो घट इति बोधः। तत्र प्रथमान्तनीलपदोत्तरप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानोत्तरत्वविशिष्टशाब्दबोधरूपं कार्य्यं घटवदिति बोधः। कारणञ्चाप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदरूपाकाङ्क्षाज्ञानं नास्तीति व्यभिचारप्रसक्त्या तद्वारणायाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकत्वं शाब्दबोधे विशेषणं देयम्। तथा च तत्र कार्य्यकारणयोर्द्वयोरप्यभावान्न दोषः। न च कारणतावच्छेदककोटावप्रामाण्यज्ञानानास्कन्दितत्वनिवेशाभावमात्रेण व्यभिचारवारणसम्भवान्न विषयप्रवेशो युक्त इति वाच्यम्। अप्रामाण्यज्ञानास्कन्दितात् नीलो घट इत्याकाङ्क्षाज्ञानादभेदान्वयवारणाय कारणकोटावप्रामाण्यज्ञानानास्कन्दितत्वनिवेशस्यावश्यकत्वात्।

ननु क्व एतस्योपयोगः? न तावत् प्रथमक्षणे नीलो घट इत्याकाङ्क्षाज्ञानं तत इदं ज्ञानमप्रमाणमितिज्ञानं ततः शाब्दबोधो मा भूदित्यर्थमन्यथा आकाङ्क्षाज्ञानस्य सत्त्वाच्छाब्दबोधापत्तिरिति युक्तम्। तत्र बोधस्याभावे स्वविशिष्टशाब्दबुद्धित्वावच्छिन्नरूपकार्य्यस्याप्यभावेनादोषात्। तत्र बोधस्य

सत्त्वे तु कारणस्यापि सत्त्वेनादोषादिति चेत्–न। यत्र प्रथमक्षणे भाविज्ञानमप्रमेति ज्ञानं, द्वितीयक्षणे नीलो घट इत्याकाङ्क्षाज्ञानं, तृतीयक्षणे आद्यस्य भाविज्ञानमप्रमेत्यप्रामाण्यज्ञानस्य नाशेनाप्रामाण्यज्ञानानास्कन्दितस्य नीलो घट इत्याकाङ्क्षाज्ञानस्य सद्भावात्, चतुर्थक्षणे नीलो घट इति बोधो भवति। कार्य्योत्पत्तिप्राक्क्षणे कारणस्य सत्त्वात् तृतीयक्षणे च बोधो न भवति। तत्प्राक् द्वितीयक्षणेऽप्रामाण्यज्ञानास्कन्दितस्यैवाकाङ्क्षाज्ञानस्य सत्त्वेन तदनास्कन्दितस्य तस्यासत्त्वात्। अप्रामाण्यज्ञानानास्कन्दितत्वनिवेशाभावे द्वितीयक्षणे आकाङ्क्षाज्ञानस्य सत्त्वात् स्वविशिष्टःशाब्दबोधः। स एव चतुर्थक्षणस्थस्तस्य तृतीयक्षणे आपत्तिप्रसङ्गादप्रामाण्यज्ञानानास्कन्दितत्वनिवेश इति बोध्यम्। न च बोधे शाब्दत्वविशेषणं व्यर्थमिति वाच्यम्। नीलो घट इत्याकाङ्क्षाज्ञाने अप्रामाण्यज्ञानास्कन्दिते अनुमितिसामग्र्याञ्च सत्यां नीलो घट इत्यनुमितिर्जायते। तत्राप्रामाण्यज्ञानानास्कन्दिताकाङ्क्षाज्ञानरूपकारणाभावे प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदस्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तराभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकबोधस्य सत्त्वे न व्यभिचारापत्तेः। शाब्दत्वनिवेशे च शाब्दबोधाभावेनादोषात्। न च कार्यदलेऽप्याकाङ्क्षाज्ञानेऽप्रामाण्यज्ञानानास्कन्दितत्वनिवेशेनैवोक्तस्थलद्वये व्यभिचाराप्रसक्त्या विषयताविशेषस्य शाब्दत्वस्य च निवेशो व्यर्थ एव। किं च विषयत्वादिनिवेशेऽपि अप्रामाण्यज्ञानानास्कन्दितत्वनिवेशः कार्य्यदले आवश्यकः। अन्यथा नीलो घटः श्यामो घटः इति समूहालम्बनात्मकाकाङ्क्षाज्ञानं नीलो घट इत्यंशेऽप्रामाण्यज्ञानास्कन्दितं यत्र तत्र बोधो भवति कार्य्यतावच्छेदकाक्रान्तोऽप्रामाण्यज्ञानानास्कन्दितं नीलो घट इत्याकाङ्क्षाज्ञानञ्च नास्तीति व्यभिचारः स्यात्। अप्रामाण्यज्ञानानास्कन्दितत्वनिवेशे च कार्य्यकारणयोरभावेनादोष इति वाच्यम्। अप्रामाण्यज्ञानेऽप्यप्रामाण्यज्ञानानास्कन्दितत्वं निवेश्यन्तत्राप्यप्रामाण्यज्ञानानास्कन्दितत्वं निवेश्यम्। एवं तत्र तत्रेत्यविश्रामः। एवं नीलपदासमभिव्याहृते घटे नीलपदसमभिव्याहृतत्वज्ञानरूपाप्रामाण्यज्ञानं नीलत्वाभाववति नीलत्वज्ञानरूपमप्रामाण्यज्ञानमित्या-

हि सर्वेषां ज्ञानानामनास्कन्दितत्वनिवेशापेक्षया विषयत्वादिनिवेशे एव लाघवम्। एवमप्रामाण्यज्ञानानां तत्तद्रूपेणैव निवेशनीयतयोक्तसमूहालम्बनस्थलीयाप्रामाण्यज्ञानव्यक्तेरनास्कन्दितत्वस्य कारणतावच्छेदके अनिवेशेनैव दोषवारणसम्भवात्। किञ्च प्रवृत्तिं प्रतीष्टसाधनत्वज्ञानं कारणम्। इष्टञ्च अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यतानिरूपकशाब्दबुद्धित्वावच्छिन्नन्तदवच्छिन्नसाधनत्वस्य नीलो घट इति वाक्येऽग्रहे नीलो घट इति वाक्ये प्रवृत्तिर्न्न स्यादतो विषयतादेः साध्यतावच्छेदके प्रवेश आवश्यक इत्यपि बोध्यम्।

ननु कार्य्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वनिवेशेन नानाकार्य्यकारणभावकल्पनापेक्षयाऽन्यतमत्वेनैवाकाङ्क्षाज्ञानानां कारणत्वं परिकल्प्यैक एव कार्य्यकारणभावोऽस्त्विति चेत्—अत्रोच्यते। अन्यतमत्वं प्रकृते प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानप्रतियोगिकभेदविशिष्टद्वितीयान्तनीलपदसमभिव्याहृतद्वितीयान्तघटपदत्वरूपाकाङ्क्षाज्ञानप्रतियोगिकभेदरित्येवं क्रमेण सकलाकाङ्क्षाज्ञानभेदं निवेश्य तद्भिन्नत्वमेव। तत्र विनिगमनाविरहेणैतदाकाङ्क्षाज्ञानभेदविशिष्टत्वेनापराकाङ्क्षाज्ञानभेदस्यापराकाङ्क्षाज्ञानभेदविशिष्टत्वेनैतदाकाङ्क्षाज्ञानभेदस्येत्येवंक्रमेण प्रवेशे कारणताबाहुल्यम्। गुरुधर्म्मस्य कारणतावच्छेदकता चेति मूलोक्तप्रकारत्यागे बीजाभावः। एवं भेदविशिष्टस्य जगतो भेदप्रतियोगितया प्रवेशेनातितरां गौरवम्। न च भेदविशिष्टस्य जगतो भेदविशिष्टत्वेनैकरूपेणैव प्रवेशो न तु तत्तद्रूपेणेति न गौरवं जगत्प्रवेशप्रयुक्तमिति वाच्यम्। जगति सर्वत्र भेदविशिष्टत्वावच्छिन्नायाः कारणतावच्छेदकतायाः सम्बन्धकल्पनेन गौरवस्य स्पष्टत्वात् नान्यतमत्वेन कारणत्वम्। न च तत्तदाकाङ्क्षाज्ञानानां यावन्तो भेदास्तद्गतसमुदायत्वावच्छिन्नप्रतियोगिताकाभावस्यैवान्यतमत्वरूपतया वैशिष्ट्यस्याप्रवेशेन न कारणतावच्छेदकस्य नानात्वं विनिगमनाविरहप्रयुक्तम्। न वा जगत्प्रवेशप्रयुक्तं गौरवं जगतोऽप्रवेशादिति वाच्यम्। यतो भेदगतसमुदायत्वस्यापेक्षा बुद्धिविशेषविषयत्वरूपतयाऽपेक्षा-

बुद्धीनाञ्च नानात्वेन विनिगमनाविरहेण सर्वबुद्धिविषयत्वरूपाणां समुदायत्वानां प्रवेशेन कारणतावाहुल्यम्। अवच्छेदकगौरवञ्च तदवस्थमेव। न च तावदाकाङ्क्षाज्ञाननिष्ठमेकमखण्डोपाधिरूपं जातिरूपम्वाऽन्यतमत्वं मत्वा तदवच्छेदेन कारणत्वकल्पने एकमेव कारणत्वं लघुधर्म्मावच्छिन्नञ्चेति वाच्यं, यतः समानविषयकशाब्दबोधं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकतया तदभावोऽन्याकाङ्क्षाज्ञानजन्यशाब्दबोधे सहकारीति तादृशप्रत्यक्षसामग्र्यां सत्यामाकाङ्क्षाज्ञानादिकरणकलापान्न शाब्दबोधः। तत्रैव शाब्दबोधो जायतामितीच्छायां सत्यामिष्टस्य शाब्दबोधस्योपपत्तये प्रत्यक्षसामग्र्यां शाब्देच्छाविरहविशिष्टत्वमपि देयम्। तथा च शाब्देच्छाविरहविशिष्टा प्रत्यक्षसामग्री नास्ति। विशेषणाभावप्रयुक्तस्य विशिष्टाभावस्य सत्त्वादुपपन्नः शाब्दबोधः। तथा यत्र नीलो घट इत्याकाङ्क्षाज्ञानं समानविषयकप्रत्यक्षसामग्री द्वितीयान्तनीलपदसमभिव्याहृतद्वितीयान्तघटपदत्वरूपाकाङ्क्षाज्ञानजन्यः शाब्दबोधो जायतामितीच्छा तत्र शाब्दबोधो न जायते। शाब्दबोधेनोत्पन्नेन यस्या इच्छाया विषयसिद्धिस्तस्या एव ह्युत्तेजकत्वात्। तत्र तत्तद्रूपेणाकाङ्क्षाज्ञानस्य कारणत्वे प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरजायमानाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानजन्यशाब्देच्छाविरहविशिष्टाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकप्रत्यक्षसामग्रीविरहविशिष्टं प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणमिति कार्य्यकारणभावशरीरे निष्पन्नेऽन्यादृशाकाङ्क्षाज्ञाने अन्यादृशाकाङ्क्षाज्ञानाधीनशाब्देच्छायाः सत्त्वेऽपि प्रतिबन्धिकायां समानविषयकप्रत्यक्षसामग्र्यां सत्यां न बोधः। अन्यतमत्वेन प्रवेशे तु अन्यतमाकाङ्क्षाज्ञानमन्यतमाकाङ्क्षाज्ञानाधीनशाब्देच्छाविरहविशिष्टसमानविषयकप्रत्यक्षसामग्रीविरहविशिष्टमभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधं प्रति

कारणमिति कार्य्यकारणशरीरे सत्यां समानविषयकप्रत्यक्षसामग्र्यां कस्माच्चिदन्यतमाकाङ्क्षाज्ञानात् क्वस्यामप्यन्यतमाकाङ्क्षाज्ञानाधीनशाब्देच्छायां शाब्दापत्तिरतो नान्यतमत्वेन कारणत्वसम्भवः। अथाव्यवहितोत्तरत्वनिवेशे नीलस्य घट इत्यादौ शाब्दापत्तिर्दुर्वारैव । स्वोत्तरजायमानाभेदसम्बन्धावच्छिन्नप्रकारताकशाब्दबोधं प्रत्येव प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वादिरूपाकाङ्क्षाज्ञानस्य कारणत्वेनापाद्यमानशाब्दबोधस्य तत्तदाकाङ्क्षाज्ञानानुत्तरत्वेन तत्तत्कार्य्यतावच्छेदकैरनाक्रान्तत्वेन तत्तत्कारणविरहस्याकिञ्चित्करत्वात् । न चाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्याप्रसिद्धत्वादेव नापत्तिः। नीलो घट इत्यादौ तत्तदाकाङ्क्षाज्ञानोत्तरत्वविशिष्टाभेदबोधस्य सर्वेऽपि शुद्धनीलत्वावच्छिन्नाभेदबुद्धेस्तत्राभावेन न तत्र प्रसिद्धिरिति वाच्यम् । समान्यस्य विशेषे एव सत्त्वेनापाद्यमानतावच्छेदकधर्मस्याभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वस्य तत्रैव प्रसिद्धेः । न च तर्हि तच्छाब्दबोधकारणीभूताकाङ्क्षाज्ञानाभावादेव नापत्तिरिति वाच्यम् । आपाद्यमानतावच्छेदकधर्म्मस्य तत्तदाकाङ्क्षाज्ञानकार्य्यतानवच्छेदकत्वमित्यस्योक्तत्वात् ।

अत्रोच्यते—सामान्यधर्म्मावच्छिन्ने कार्य्ये जननीये विशेषधर्मावच्छिन्नकार्य्योत्पादकसामग्र्या अपेक्षा। यथा शुक्लपटत्वावच्छिन्नं प्रति शुक्लतन्तोः, कृष्णपटत्वावच्छिन्नं प्रति कृष्णतन्तोः कारणत्वे निर्णीते पटत्वावच्छिन्नकार्यस्य तत्तच्छुक्लकृष्णतन्तूनामेवापेक्षा न तु कारणान्तरस्य । एवं सति सामान्यनीलत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्ने विशेषतत्तदाकाङ्क्षाज्ञानाव्यवहितोत्तरत्वविशिष्टतादृशधर्मावच्छिन्नकार्य्योत्पादकसामग्र्यास्तत्तदाकाङ्क्षाज्ञानादिघटिताया अपेक्षणात् । प्रकृते नीलस्य घट इत्यादौ तासां तत्तदाकाङ्क्षाज्ञानघटितानां सामग्रीणां कस्या अप्यभावेन नापत्तिः ।

ननु कारणकूट एव सामग्री । तथा च सामान्यधर्म्मावच्छिन्ने कार्य्ये

जननीये विशेषधर्म्मावच्छिन्नस्य कार्य्यस्य कारणसमुदाय अपेक्ष्यत इत्येव फलति । तच्च न युक्तम् । नीलो घट इत्यादौ सामान्यधर्मावच्छिन्नकार्य्यस्य सत्त्वेऽपि विशेषतत्तदाकाङ्क्षाज्ञानाव्यवहितोत्तरविशिष्टतादृशधर्म्मावच्छिन्नकारणकूटस्य सकलतत्तदाकाङ्क्षाज्ञानघटितस्याभावेन कुत्राप्यभेदबोधानापत्तेरिति चेत्—न । विशेषधर्म्मावच्छिन्नकार्य्योत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नस्यापेक्षेति कथनेनादोषात् । एकैकाकाङ्क्षाज्ञानघटितसमुदायत्वस्यैव तथात्वेन तदवच्छिन्नस्य नीलो घट इत्यादौ सर्वत्र सत्त्वात् अपेक्षाबुद्धिविशेषविषयत्वरूपसमुदायत्वस्याननुगतत्वेऽपि कार्य्योत्पत्तिप्रयोजकतावच्छेदकत्वेनानुगमसम्भवात् । अभेदसम्बन्धेन नीलविशिष्टघटत्वावच्छिन्नशाब्दबोधं प्रति तादृशशाब्दबुद्धित्वव्याप्यधर्म्मावच्छिन्नकार्य्यतानिरूपितकारणतावदाकाङ्क्षाज्ञानं कारणमिति प्रकृतापत्तिवारणायाङ्गीक्रियत इति नापत्तिरिति परे ।

अत्र केचित् विशेष्यवाचकपदे प्रथमान्तत्वादिकमनिवेश्यैव प्रथमान्तनीलपदसमभिव्याहृतघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरतादृशशाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणम् । एवं द्वितीयान्तनीलपदसमभिव्याहृतघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरतादृशशाब्दबोधं प्रति द्वितीयान्तनीलपदसमभिव्याहृतद्वितीयान्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणमित्येवं क्रमेण कार्य्यकारणभावे नीलस्य घट इत्यादावापाद्यमानशाब्दस्य षष्ठ्यन्तनीलपदसमभिव्याहृतषष्ठ्यन्तघटपदत्वरूपाकाङ्क्षाज्ञानस्य कार्य्यतावच्छेदकषष्ठ्यन्तनीलपदसमभिव्याहृतघटपदाव्यवहितोत्तरतादृशशाब्दबुद्धित्वाक्रान्ततया तादृशाकाङ्क्षाज्ञानाभावेन नापत्तिरित्याहुः ।

तन्न । नीलस्य घटः नीलो घट इति समूहालम्बनात्मकाकाङ्क्षाज्ञानादिष्टस्य नीलघटाभेदान्वयस्यानापत्तेस्तस्य स्वकीयकार्य्यतावच्छेदकाक्रान्तत्वेन षष्ठ्यन्तनीलपदसमभिव्याहृतषष्ठ्यन्तघटपदत्वरूपाकाङ्क्षाज्ञानस्याभावात् ।

परे तु अव्यवहितोत्तरत्वादिघटितान् प्रथमान्तत्वादिघटितान् कार्य्य-

यत्तु समासव्याससाधारणं विशेषणपदस्य विशेष्यवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वरूपं विरुद्धविभक्तिराहित्यमेव तादृशान्वयबोधौपयिकाकाङ्क्षा विशेष्यवाचकपदनिष्ठविशेषणवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वं च न तथा नीलघटमानयेत्यादावसंभवादिति-तदसत् । विशेष्यवाचकपदाप्रकृतिकत्वस्य तादृशपदानुत्तरत्वस्य तदुत्तरत्वेनाप्रतिसन्धीयमानत्वरूपस्य वा नीलो घट इत्यादौ

---

कारणभावान् षट्संख्याकान् विधाय तत्तदाकाङ्क्षाज्ञानानुत्तरतादृशशाब्दबुद्धित्वावच्छिन्नं प्रति सप्तम्यन्तनीलपदसमभिव्याहृतसप्तम्यन्तघटपदत्वरूपाकाङ्क्षाज्ञानस्य कारणत्वमित्यभ्युपगमेन नीलस्य घट इत्यादौ आपाद्यमानस्यानुत्तरत्वादिघटितकार्य्यतावच्छेदकाक्रान्तत्वेन तत्कारणाभावेनापत्त्यभावादित्याहुः ।

तदपि न । नीलो घटः नीलस्य घट इति समूहालम्बनाकाङ्क्षाज्ञानात् नीलो घट इत्यंशेऽप्रामाण्यज्ञानास्कन्दितात् नीलघटाभेदान्वयबोधापत्तेस्तादृशापाद्यमानस्य तत्तदाकाङ्क्षाज्ञानानुत्तरत्वादिघटितकार्य्यतावच्छेदकधर्म्माक्रान्ततया सप्तम्यन्तत्वघटितकारणविरहस्याकिञ्चित्करत्वादिति दिक् ।

नानाकाङ्क्षाज्ञानानां कारणत्वापेक्षया लाघवादेकस्यैवाकाङ्क्षाज्ञानस्य कारणत्वमस्त्वति नानेककार्य्यकारणभावो नाप्यव्यवहितोत्तरत्वादिनिवेश इत्याह—यत्त्वित्यादिना ।

ननु विशेष्यवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वं विशेषणवाचकपदे विशेषणवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वं विशेष्यवाचकपदे । अनयोरेव विनिगमनाविरहेण कारणत्वापत्तावनेककारणत्वं कारणाव्यवहितोत्तरत्वनिवेशोऽप्यावश्यक एवेत्यत आह—विशेष्यवाचकेत्यादि । सत्त्वादिति । प्रत्युच्चारणं शब्दस्य भेदेन नीलपदोत्तरत्वादिविशिष्टविभक्तेर्घटपदोत्तरत्वादिविभक्तिभिन्नत्वमिति भावः ।

नीलादिपदसमभिव्याहृतविभक्तौ घटपदसमभिव्याहृतविभक्तिभिन्नतया सत्त्वात्। अथ विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्मवद्विभक्तिराहित्यस्य विवक्षणान्न दोष इति चेत्तर्हि विभक्तित्वा-

---

विभक्तीनां भेदेऽपि तन्निष्ठप्रथमात्वादीनामभेदात्तद्घटितस्यैवाकाङ्क्षात्वमुच्यते—अथेत्यादिना। विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकेत्यादि। नीलो घटः नीलघट इत्यादौ विशेष्यवाचकं पदं घटपदं तदुत्तरा सुविभक्तिः तदवृत्तिर्विभक्तिविभाजको द्वितीयात्वादिधर्म्मस्तद्वत्यो द्वितीयादिविभक्तयस्तद्राहित्यस्योभयत्र नीलादौ सत्त्वेन साकाङ्क्षत्वमुपपन्नम्। अथ विशेष्यवाचकं घटपदन्तदुत्तरत्वं सर्वासां विभक्तीनां घटं घटेन घटायेत्यादौ तन्निरूपितवृत्तित्वस्यैव सर्वेषां विभाजकद्वितीयात्वादीनां सत्त्वेन विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्म्माप्रसिद्धिः। विशेष्यवाचकपदोत्तरयत्किञ्चिद्विभक्त्यवृत्तित्वनिवेशे नीलो घट इत्यादावपि नाकाङ्क्षा स्यात्। प्रथमात्वस्यापि नीलं घटमित्यादौ विशेष्यवाचकघटपदोत्तरद्वितीयाविभक्त्यवृत्तित्वेन तद्वत्सुविभक्तिप्रकृतित्वस्यैव नीलपदे सत्त्वात्। विशेष्यवाचकपदस्य घटपदत्वादिना प्रवेशेऽप्युक्तदोषद्वयस्यानिस्तार एव। तद्व्यक्तित्वादिना प्रवेशे तूक्तदोषद्वयनिस्तारेऽपि नीलो घट इत्याद्यानुपूर्वीमद्वाक्येऽपि प्रत्युच्चारणं घटशब्दस्य भेदेन तत्तद्व्यक्तिप्रवेशेनाकाङ्क्षाया अप्यानन्त्यापत्त्या 'वृश्चिकभिया पलायमानस्य तरक्षुमुखे निपात एवे'ति चेत्-न। उक्तस्थले नीलपदे घटपदवत्त्वमेवाकाङ्क्षेति स्वीकारात्। घटपदवत्ता च स्वाभाववत्त्वसम्बन्धेन। अभावश्च स्वोत्तरावृत्तिविभक्तिविभाजकधर्म्मवद्विभक्तिप्रकृतित्वसम्बन्धावच्छिन्नप्रतियोगिताकः। तथा च नाप्रसिद्धिर्न वाऽननुगमः। यद्घटपदवत्त्वं विवक्षितन्तद्घटपदव्यक्त्युत्तरविभक्तेरेव सम्बन्धघटकतया प्रवेशेन व्यक्त्यन्तरघटपदमादाय दोषदानस्यासंभवात्।

विभक्तित्वादिकमजानत इति। येन विभक्तित्वं न ज्ञायते तस्यापि

दिकमजानतः पुरुषस्य तादृशधर्मज्ञानासंभवाच्छाब्दबोधानुपपत्तिः। नीलो घट इत्यादावपि सुपदस्याम्पदत्वादिभ्रमदशायां तादृशबोधस्यानुदयात्। नीलस्य घट इत्यादावपि षष्ठ्यादेः सुपदत्वादिभ्रमदशायां शाब्दबोधोत्पत्त्या स्वरूपतो विरुद्धविभ-

---

नीलो घट इत्यादितः शाब्दबोधो भवति। विभक्तित्वघटिताया आकाङ्क्षायाः स्वीकारे विभक्तित्वज्ञानाभावेन तद्घटिताकाङ्क्षाया अपि ज्ञानाभावेन तस्य तद्वाक्याच्छाब्दबोधो न स्यादित्यर्थः। न च स्वोत्तरावृत्तिधर्म्मवदित्याद्येवोच्यतां विभक्तिर्विभाजकत्वन्न निवेश्यतां तथा च विभक्तित्वज्ञानमन्तराऽपि शाब्दबोधः स्यादिति वाच्यं, नीलो घट इत्यादौ नीलपदोत्तरविभक्तिगततद्व्यक्तित्वस्य घटपदोत्तरविभक्त्यवृत्तित्वेनाकाङ्क्षानापत्तेः।

ननु विशेष्यवाचकपदोत्तरावृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मेत्याद्येवास्तु तद्व्यक्तित्वस्य श्रावणप्रत्यक्षविषयतानवच्छेदकत्वान्नोक्तदोषः। स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्ट एव धर्म्मो निवेश्यताम्वा। तद्व्यक्तित्वञ्च भेदविशिष्टभिन्नमेवेति चेत्—उच्यते। नीलो घटः नीलघट इतिवाक्यगतश्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मातिरिक्तस्य तद्वाक्यगतधर्म्मस्य शाब्दबोधात् प्रागज्ञानेऽपि शाब्दबोधस्येष्टस्यानापत्तेः। नीलो घट इत्यत्र घटपदोत्तरविसर्गावृत्तेरोत्वस्य नीलपदोत्तरविभक्तिवृत्तित्वेन निराकाङ्क्षत्वापत्तेश्च। एतदर्थमेव विभक्तित्वादिकेत्यत्रादिपदोपादानमिति दिक्।

नन्वाकाङ्क्षैव कारणं न तज्ज्ञानमिति विभक्तित्वादिधर्म्माज्ञानेऽपि तस्या वस्तुतः सत्त्वेनानुपपत्त्यभाव इत्यत आह—घट इत्यादावपीत्यादि। स्वरूपत इति। वस्तुसत इत्यर्थः। अज्ञातस्यापीति यावत्। विरुद्धविभक्तिराहित्यस्येति। निरुक्ताकाङ्क्षाया इत्यर्थः।

क्तिराहित्यस्याप्रयोजकत्वात् । अथ नीलो घटः नीलघट इत्यादि-द्विविधबोधसाधारणं स्वोत्तरसुपदभिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वादिरूपस्वाऽव्यवहितोत्तरत्वसम्बन्धेन नीलादिपदवत्स्वन्तघटादिपदत्वमेव तथास्त्विति चेत्-न । नीलघटरूपमित्यादिवाक्यसाधारण्यानुरोधेनान्यदृश्या अपि आकाङ्क्षायाः समासस्थले उपगन्तव्यतया उपदर्शितसमासव्याससाधारणानुगताकाङ्क्षानुसर-

---

स्वोत्तरसुपदभिन्नपदानुत्तरत्वेत्यादि । अयं भावः । नीलो घटः नीलघट उभयत्र स्वोत्तरत्वस्वोत्तरसुपदभिन्नपदानुत्तरत्वोभयसम्बन्धेन नीलपदविशिष्टस्वन्तघटपदत्वमेवाकाङ्क्षाऽस्तु । स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वं नीलपदाव्यवहितोत्तरघटपदत्वमित्याकाङ्क्षाद्वयोपगमो निरर्थक इति । नीलघटरूपमिति । अत्र कर्म्मधारयपूर्वपदकषष्ठीतत्पुरुषः । षष्ठीतत्पुरुषोत्तरपदककर्म्मधारयो वा । आद्ये नीलस्य घटान्वयित्वे एकदेशान्वयापत्तिः । समासे वृत्त्यभावेन घटस्य घटीये लक्षणां विधाय रूपे अभेदान्वयस्यैव वक्तव्यत्वात् । द्वितीये रूपस्यैव विशेष्यवाचकपदत्वन्न घटरूपसमुदायस्य तत्र वृत्त्यभावात् । तथा च नीलोत्तरसुभिन्नपदं घटपदन्तदुत्तरत्वस्यैव रूपपदे सत्त्वेनानाकाङ्क्षत्वापत्तेस्तदर्थमन्यादृश्या अप्याकाङ्क्षाया वक्तव्यत्वेन कार्य्यकारणभावबाहुल्यादुक्तस्थलद्वये एकाकाङ्क्षायास्सद्भावस्याकिञ्चित्करत्वात् । इदमुपलक्षणम् । नीलौ घटौ नीला घटाः इत्यादि सर्वविभक्त्यन्तवाक्यानां नीलघटौ नीलघटा इत्यादिसमासानाञ्चैकविधाकाङ्क्षाया वक्तुमशक्यत्वात् । सर्वत्र दोषस्य सत्त्वात् स्वोत्तरसुप्पदभिन्नपदानुत्तरत्वस्वोत्तरत्वोभयसम्बन्धेन नीलपदविशिष्टसुवन्तघटपदत्वरूपाकाङ्क्षायां तात्पर्य्यकल्पने उक्तस्थलेषु दोषाभावेऽपि नीलस्य घटः नीलौ घट इत्यादीनामपि साकाङ्क्षत्वापत्तेस्तस्मात् स्वोत्तरसुपः सुत्वादिनैव प्रवेश्य स्वोत्तरसुपदभिन्नपदानुत्तरत्वस्वोत्तरत्वोभयसम्बन्धेन नीलपदविशिष्टस्वन्त-

णस्याप्रयोजकत्वादिति । अथ नीलं घटमानयेत्यादौ नीलादेर्घटादावन्वयोपगमे नीलादिपदोत्तरविभक्त्यर्थकर्मत्वादेः कुत्रान्वय इति चेत्–न कुत्रापि । विभक्तिपदं साधुत्वार्थमेव प्रयुज्यते । अभेद एव वा विशेषणविभक्तेरर्थः । अभेदस्य संसर्गमर्यादया भानं तु समासस्थल एव । तत्र लुप्तविभक्त्यनुसंधानं विनापि शाब्दबुद्धेरा-

---

घटपदत्वमितिरीत्या नानाविधाया एव तस्या वक्तव्यत्वात् । घटो नीलः नीलोऽस्ति घट इत्यादावपि भिन्नैवाकाङ्क्षा ।

नीलं घटमानयेत्यत्र नीलघटयोरभेदान्वयबोधे शाब्दत्वस्य सर्वानुभवसिद्धतया न नीलान्वितकर्मत्वस्यानयनक्रियायामन्वयः । घटेऽन्वितस्य नीलस्य कर्मत्वेऽप्यन्वये द्विधा भानप्रसङ्गात् प्रकृत्यर्थान्वितस्यैव प्रत्ययार्थस्य भाननियमात् । नीलानन्वितकर्मत्वस्य क्रियायामन्वयासम्भवात् । नाऽपि नीले कर्मत्वस्यान्वयः, कारकाणां क्रियायामन्वयनियमात् । प्रकृत्यर्थे प्रति प्रत्ययार्थस्य विशेष्यत्वनियमाच्च । नीलान्वितकर्मत्वस्य च क्रियायामन्वयः नीलघटयोरभेदभानं मानसं नीलनिष्ठकर्मतानिरूपकमानयनं घटश्च नीलाभिन्न इत्यपि न । अभेदांशेऽनुभवसिद्धस्य शाब्दत्वस्यापलपितुमशक्यत्वात् । इत्थञ्च कर्मत्वस्य कुत्रान्वय इति प्रश्नः । न कुत्रापीति । कर्मत्वस्य न भानम् । अभेदान्वयबोधप्रयोजकसमानविभक्तिकत्वरूपाकाङ्क्षासम्पादकतयैव साधुत्वार्थत्वम् । तदर्थस्याभाने निरर्थकत्वमेवेत्यत आह-अभेद एवेति । ननु तह्यभेदस्य प्रातिपदिकार्थे संसर्गतया भानमिति पूर्वग्रंथविरोधोऽत आह-समासस्थल इति । ननु समासेऽपि विभक्तेरनुसन्धानेन तदर्थ एवाभेद इत्यत आह-तत्र लुप्तविभक्तीत्यादि । अभेदस्य च भेदाभावोऽर्थस्तदर्थैकदेशभेदे नीलस्य स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेनान्वयोऽभावस्य च स्वरूपसम्बन्धेन घटेऽन्वयः । तथा च नीलनिष्ठप्रतियोगितानिरूपकभेदप्रतियोगिकाभाव-

नुभविकत्वादित्यपि वदन्ति । अथैतन्मते अभेदो यदि भेदत्वाव-च्छिन्नाभावस्तदाऽप्रसिद्धिः, यदि च भेदप्रतियोगिकोऽभावस्तदा

---

विशिष्टो घट इत्यर्थः । एतन्मत इति । अभेदस्य विभक्त्यर्थत्वमत इत्यर्थः । तदाऽप्रसिद्धिरिति । यस्य कस्य चिद्भेदस्य सर्वत्रैव सत्त्वादभावस्य प्रतियोगितावच्छेदकावच्छिन्नेन सह विरोधात् भेदत्वावच्छिन्नप्रतियोगिता-काभावाप्रसिद्धिरित्यर्थः ।

ननु तादृशाभावस्याप्रसिद्धत्वे तत्प्रसिद्धेरप्यप्रसिद्धत्वे तत्प्रसिद्ध्यभावो-ऽप्यप्रसिद्ध इति तदाऽप्रसिद्धिरित्यस्य कोऽर्थः ? अत्रोच्यते । स्यादयं दोषो यदि अप्रसिद्ध्येकदेशप्रसिद्धौ भेदत्वावच्छिन्नाभावान्वयः स्यात् । स एव न किन्तु घटादौ भेदस्य भेदे भेदत्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धस्यात्य-न्ताभावेऽप्रसिद्धिरित्यर्थः । भेदनिष्ठप्रकारतादौ प्रसिद्धस्य भेदत्वावच्छि-न्नत्वस्यात्यन्ताभावीयप्रतियोगितायामप्रसिद्धिरित्यर्थो वेति बोद्धव्यम् ।

ननु भेदत्वेन घटाभावस्य संयोगेन भेदाभावस्य भेदघटोभयाभावस्य च भेदत्वावच्छिन्नप्रतियोगिताकतया तेषाञ्च प्रसिद्धतया कथं भेदत्वावच्छिन्न-प्रतियोगिताकोऽभावोऽप्रसिद्ध इति चेत्—न । भेदनिष्ठस्वरूपसम्बन्धावच्छिन्न-भेदत्वपर्य्याप्तावच्छेदकतानिरूपितावच्छेद्यतावत्प्रतियोगिताकोऽभावोप्रसिद्ध इति तात्पर्य्यात् । आद्ये प्रतियोगितायां भेदनिष्ठत्वाभावात्, द्वितीये तस्यां स्वरूपसम्बन्धावच्छिन्नत्वाभावात्, तृतीये तस्यां भेदत्वपर्य्याप्तावच्छेदकता-निरूपितावच्छेद्यताया अभावात्, तेषामभावानां प्रकृताभावपदेनाग्रहणात् ।

ननु भेदत्वेन भेदघटौ न स्त इति प्रतीतिविषयीभूतोऽभावस्तादृशः प्रतियोगिताया भेदवृत्तित्वात् । एवं स्वरूपसंयोगोभयसम्बन्धेन भेदत्वेन भेदाभावोऽपि तथा प्रतियोगितायाः स्वरूपसम्बन्धावच्छिन्नत्वात् । किञ्च भेदघटोभयाभावीयप्रतियोगितावच्छेदकतापि प्रत्येकघटत्वादिपर्य्याप्तैव न तु भेदत्वघटत्वादित्रितयपर्य्याप्ता मानाभावात् । घटो नास्ति भेदो नास्तीति

प्रतीतिविषयीभूतप्रतियोगितावच्छेदकतायाः घटत्वादिप्रत्येकपर्य्याप्ताया एवो-भयाभावीयप्रतियोगितानिरूपितत्वेनापि भानसम्भवात् तस्य च प्रसिद्धत्वादिति चेत्-न। उभयादिपर्य्याप्ताया एकस्या अभावे घटसत्त्वे घटो नास्ति भेदो नास्तीति समूहालम्बनप्रतीतिर्न्न भवति। घटभेदो न स्त इति प्रतीतिश्च भवत्यतो निरुक्तसमूहालम्बनप्रतीतिविषयाभावविलक्षणोयमुभयाभावो वैलक्षण्यञ्चैतदेव यदुभयाभावीयप्रतियोगितावच्छेदकतायाः घटत्वाद्युभयपर्य्याप्तत्वमित्यदोषात्। भेदत्वविशिष्टाभावस्यैव विवक्षितत्वात्। वैशिष्ट्यञ्च स्वपर्य्याप्तावच्छेदकता निरूपितावच्छेद्यतावत्स्वरूपसम्बन्धपर्य्याप्तावच्छेदकतानिरूपितावच्छेद्यतावत्प्रतियोगिताकत्वस्वपर्य्याप्तावच्छेदकतानिरूपितावच्छेद्यतावन्निरूपकतानिरूपितनिरूप्यतावत्त्वोभयसम्बन्धेन। भेदत्वेन भेदघटोभयाभावीयप्रतियोगितावच्छेदकताया भेदत्वपर्य्याप्तत्वेऽपि तदभावीयनिरूपकतावच्छेदकताया भेदत्वापर्य्याप्तत्वात्। द्वितीयेऽभावे च संसर्गतात्मकप्रतियोगितावच्छेदकतायाः स्वरूपसंयोगोभयपर्य्याप्तत्वेन स्वरूपसम्बन्धापर्य्याप्तत्वात्।

ननु घटत्वभेदत्वोभयत्वत्रितयपर्य्याप्त्याप्यवच्छेदकता भेदत्वेऽपि पर्य्याप्तैव न ह्यवयवापर्य्याप्तस्य समुदाये पर्य्याप्तिरस्तीत्युक्तेस्तथा चोभयाभावीयापि प्रतियोगिता भेदत्वपर्य्याप्तावच्छेदकताका निरूपकतावच्छेदकताऽप्युक्तरीत्या भेदत्वपर्य्याप्तेति कथमुभयाभावस्याग्रहणमिति चेत्-न। त्रितयपर्य्याप्तायास्तस्याः प्रत्येकपर्य्याप्तत्वेऽपि पर्य्याप्तिरेकैव तदनुयोगितावच्छेदकन्त्रितयगतन्त्रित्वमेव समनियतत्वात् न तु भेदत्वगतमेकत्वन्तस्यानुयोगितापेक्षयान्यूनवृत्तित्वात्। तथा च भेदत्वगतैकत्वविशिष्टोऽभाव एवाप्रसिद्धत्वेन विवक्षित इत्यदोषात्। वैशिष्ट्यञ्च स्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोग्यवच्छेदकतानिरूपितावच्छेद्यतावन्निरूपकताकत्वस्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोग्यवच्छेदकतानिरूपितावच्छेद्यतावती या स्वरूपसम्बन्धत्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोग्यवच्छेदकतानिरूपितावच्छेद्यतावती प्रतियोगिता तन्निरूपकत्वोभयसम्बन्धेनोभयाभावीयप्रति-

योगिता च न भेदत्वगतैकत्वावच्छिन्नानुयोगितानिरूपकपर्य्याप्तिप्रतियोगिभूतावच्छेदकताकाऽपि तु चैत्रत्वावच्छिन्नानुयोगितानिरूपकपर्य्याप्तिप्रतियोगिभूतावच्छेदकताकेति तस्य प्रसिद्धत्वेऽपि विवक्षितताभावस्याप्रसिद्धत्वात् ।

ननु द्वित्वादिकं यथा द्वित्वत्वादिनैव व्यासज्यवृत्ति न तु वस्तुत्वादिनापि तथोभयाभावस्य प्रतियोगितावच्छेदकतानिरूपकतावच्छेदकता प्रतियोगितानिरूपितसंसर्गतात्मकावच्छेदकता चावच्छेदकतात्वेनैव व्यासज्यवृत्तिर्न्न तु वस्तुत्वादिनाऽपि । तथा च वस्तुत्वावच्छिन्नप्रकृतावच्छेदकतानिष्ठप्रतियोगितानिरूपकपर्य्याप्त्यनुयोगितावच्छेदकं भेदत्वगतैकत्वमेव वस्तुत्वावच्छिन्ना या निरूपकतावच्छेदकतानिष्ठप्रतियोगिता तन्निरूपकपर्य्याप्त्यनुयोगितावच्छेदकमपि भेदत्वगतमेकत्वं तथा वस्तुत्वावच्छिन्ना या प्रतियोगितानिरूपितसंसर्गतात्मकावच्छेदकतानिष्ठाप्रतियोगिता तन्निरूपकपर्य्याप्त्यनुयोगितावच्छेदकमपि स्वरूपसम्बन्धत्वगतमेकत्वम् । तथा च भेदत्वगतैकत्वविशिष्टाभावोऽपि स एवोभयाभावो वस्तुत्वावच्छिन्नप्रतियोगितामादायेति स एव दोष इति चेत्—न । स्वनिरूपितप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्वनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन भेदत्वगतैकत्ववृत्तिर्योऽभावस्तस्यैवाभिप्रेतत्वेनादोषात् । वस्तुत्वावच्छिन्नप्रतियोगितायाः संसर्गाघटकत्वात् । संसर्गघटकाभावीयप्रतियोगिता च स्वनिरूपितसंसर्गतात्मकावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन स्वरूपसम्बन्धत्वगतैकत्ववृत्तिरेवेति न स्वरूपसंयोगोभयसम्बन्धेन भेदाभावमादायापि दोषः ।

ननु भेदत्वघटत्वोभयत्वैतत्त्रितयगताप्यवच्छेदकताभेदत्ववृत्तित्वविशिष्टावच्छेदकतात्वेन भेदत्व एव सकलब्राह्मणावृत्त्यपि ब्राह्मणत्वं चैत्रवृत्तित्वेन चैत्र एवेतिवत्तथा चावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकमपि भेदत्वगतैकत्वमेवेति स दोषस्तदवस्थ एव । यद्यपि

भेदत्ववृत्तित्वावच्छेदकतात्वोभयधर्म्मावच्छिन्ना पर्य्याप्तीया प्रतियोगिता नावच्छेदकतात्वावच्छिन्ना तथापि पूर्वोक्तरीत्योभयपर्य्याप्तीया अपि प्रतियोगितावच्छेदकतायाः अवच्छेदकतात्वपर्य्याप्तत्वमन्यतमेवेत्यवच्छेदकतात्वपर्य्याप्तावच्छेदकतानिरूपितावच्छेद्यतावत्वेन प्रतियोगितायाः प्रवेशेऽपि दोषानुद्धार एव। न च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेनावच्छेदकतात्वगतैकत्ववृत्तिप्रतियोगितानिरूपकपर्य्याप्तेरेव प्रवेशान्न दोष इति वाच्यम्। उक्तरीत्योभयवृत्त्यप्यवच्छेदकताऽवच्छेदकतात्ववृत्तित्वेनावच्छेदकतात्व एव। तत्रापि किञ्चिन्निवेशे पुनरपि पूर्वोक्तरीत्या दोष इत्यनवस्थापात इति चेत्—अत्रोच्यते। भेदत्ववृत्तित्वविशिष्टावच्छेदकतावद्भेदत्वमिति प्रतीतावच्छेदकतानिष्ठाधेयता भेदत्ववृत्तित्वावच्छिन्नैव नावच्छेदकतात्वावच्छिन्ना नापि भेदत्ववृत्तित्वावच्छेदकतात्वोभयधर्म्मावच्छिन्ना मानाभावात्। तथा च स्वनिरूपितावच्छेदकतात्वावच्छिन्नपर्य्याप्तिसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावच्छेदकत्वसम्बन्धेन भेदत्ववृत्तिप्रतियोगितानिरूपकाभाव एवाप्रसिद्धत्वेन विवक्षितः। प्रकृताधेयताया भेदत्ववृत्तित्वावच्छिन्नत्वेनावच्छेदकतात्वावच्छिन्नत्वाभावान्न दोषः। न च भेदत्ववृत्तिमत् भेदत्वं भेदत्ववृत्त्यवच्छेदकतावत् भेदत्वमनयोः प्रतीत्योर्भेदत्ववृत्तित्वावच्छिन्नाया एवाधेयताया विषयत्वे वैलक्षण्यानुपपत्तिरिति वाच्यम्। एकत्रावच्छेदकतात्वस्य प्रकारत्वमन्यत्र नेत्येतद्वैलक्षण्यस्यैव सत्त्वात्। विस्तरस्त्वस्मद्विरचितायां शास्त्रार्थरत्नावल्यां विजयायाञ्च द्रष्टव्यः।

यदि च भेदप्रतियोगिकोऽभाव इति। तथा च यस्य कस्य चिद्भेदस्य सत्त्वेऽपि यस्य कस्य चिद्भेदस्य तद्व्यक्तित्वेनाभावसद्भावात् नाप्रसिद्धिरिति भावः। नीलो घट इत्यादौ नीलस्य स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेन विभक्त्यर्थभेदाभावैकदेशे भेदेऽन्वयोऽभावस्य च स्वरूपसम्बन्धेन घटेऽन्वयस्तथा च नीलनिष्ठप्रतियोगितानिरूपकभेदनिष्ठप्रतियोगितानिरूपकाभावविशिष्टो घट इति बोधः।

नीलं जलमित्यादिवाक्यस्यापि प्रामाण्यापत्तिः । जले द्वित्वादिना

---

ननु नीलप्रतियोगिकभेदस्यैव जले सत्त्वेन तस्य तद्व्यक्तित्वेनाप्यभावो जले नास्तीति कथं नीलं जलमित्यस्य प्रामाण्यमित्यत आह—द्वित्वादिनेति। भेदघटोभयं नास्ति पृथिवीवृत्तित्वविशिष्टभेदो नास्तीति प्रतीतिविषयीभूतस्य द्वित्वावच्छिन्नप्रतियोगिताकस्य पृथिवीवृत्तित्वभेदत्वोभयधर्म्मावच्छिन्नप्रतियोगिताकस्य च नीलभेदप्रतियोगिकस्याभावस्य जले सत्त्वेन प्रामाण्यं स्यादित्यर्थः। यदि च भेदत्वनिष्ठप्रतियोगितावच्छेदकताकोऽभावस्तथाऽपि स एव दोषः। उक्ताभावस्यापि भेदत्वनिष्ठप्रतियोगितावच्छेदकताकत्वात्। यदि च भेदत्वपर्य्याप्तप्रतियोगितावच्छेदकताकोऽभावो विवक्षितः प्रकृताभावीयप्रतियोगितावच्छेदकतापर्य्याप्तिश्च न भेदत्वे तदाऽप्रसिद्ध एवेत्युक्तम्।

ननु प्रतियोगिव्यधिकरणोऽभावो गृह्यते निरुक्ताभावौ च प्रतियोगिभूतभेदसमानाधिकरणमेवेति न दोष इति चेत्—न। सर्वस्यैव पदार्थस्य प्रतियोगितया प्रतियोगिव्यधिकरणाभावस्याप्रसिद्धेः। स्वप्रतियोगिव्यधिकरण इत्युक्तावननुगमः।

ननु व्यासज्यवृत्तिधर्म्मानवच्छिन्नभेदनिष्ठप्रतियोगितानिरूपकोऽभावो गृह्यते निरुक्ताभावस्य व्यासज्यवृत्तिद्वित्वावच्छिन्नप्रतियोगिताकत्वादिति चेत्—न। तथाऽपि पृथिवीवृत्तित्वविशिष्टनीलभेदाभावं घटत्वेन नीलभेदाभावं संयोगेन नीलभेदाभावञ्चादाय नीलं जलमित्यस्य प्रामाण्यापत्तेरवारणात्। यदि च स्वप्रतियोगिसामानाधिकरण्यस्वतादात्म्यैतदुभयसम्बन्धेनाभावविशिष्टभिन्नोऽभावः स्वनिरूपकत्वस्वाश्रयसामानाधिकरण्योभयसम्बन्धेन प्रतियोगिताविशिष्टान्यो वाऽभावो गृह्यते। उक्ताभावाश्च नैतादृशा इति न दोषो नाप्यननुगमो न वाऽप्रसिद्ध इत्युच्यते। तदा पुनरप्यभावविशिष्टघटोभयभेदं प्रतियोगिताविशिष्टघटोभयभेदञ्चादाय निरुक्ताभावानामपि ग्रहणसम्भवेन दोष एवेति चेत्—अत्रोच्यते। अभावविशिष्टत्वप्रतियोगिताविशिष्टत्वपर्य्याप्तप्रतियोगितावच्छेदकताकभेदस्य ग्रहणेनोभयभेदस्य निरस-

नीलभेदाद्यभावस्य सत्त्वात्। नीलभेदत्वावच्छिन्नाभावस्य विभक्त्यर्थत्वे नीलादिपदार्थानन्वयप्रसङ्गः। न च भेदप्रतियोगिकाभाव एव

---

नेन न दोष इति चेत्—इदमत्रावधेयम्। नीलभेदः स्वाभाववत्वसम्बन्धेन नीलत्वसमनियतत्वान्नीलत्वरूपस्तथा च नीलभेदाभावस्य नीलभेद इव नीलत्वमपि प्रतियोगि तत्समानाधिकरण एव नीलभेदाभाव इति प्रतियोगिताविशिष्टान्यो नीलभेदाभावोऽप्रसिद्ध एव। किञ्चानीलघटभेदो नीलगुणस्वरूपो नीलगुणस्य च नानात्वात्। यत्किञ्चिन्नीलगुणवत्यपि घटे यत्किञ्चिन्नीलगुणात्मकस्यानीलघटभेदस्य योऽभावस्तस्य सत्त्वेन नीलो घटोऽनील इत्यापद्येतेति।

ननु नीलो घट इत्यादौ नीलभेदत्वावच्छिन्नप्रतियोगिताकाभाव एव विभक्त्यर्थोऽस्तु। नीलभेदत्वपर्य्याप्तावच्छेदकतायाः प्रवेशेन नोभयाभावमादाय नीलं जलमित्यस्य प्रामाण्यं नीलस्य प्रतियोगितावच्छेदके प्रवेशेन नाप्रसिद्धिरपि। न च पीतो घट इत्यादौ पीतभेदत्वावच्छिन्नप्रतियोगिताकाभावस्यैव विभक्त्यर्थत्वं वक्तव्यम्। तथा च शक्यतावच्छेदकानन्त्येन शक्त्यनन्तताप्रसंग इति वाच्यम्। स्वप्रकृत्यर्थतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभावत्वस्यैकस्यैव शक्यतावच्छेदकत्वेनानन्त्याप्रसङ्गात् नीलादिपदसमभिव्याहाराच्च। नीलत्वाद्यवच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभावो विभक्त्यर्थो लभ्यते। पीतो घट इत्यादौ च पीतपदसमभिव्याहारात् पीतत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभावो विभक्त्यर्थ इत्याह—नीलभेदत्वावच्छिन्नाभावस्येत्यादि।

नीलादिपदार्थानन्वय इति। नीलरूपप्रकृत्यर्थस्य विभक्त्यर्थैकदेशे नीले अभेदेन नान्वयः प्रकारतावच्छेदकभेदस्य विशेष्यतावच्छेदकेऽभावात्। नापि नीलभेदे स्वप्रतियोगिकत्वसम्बन्धेनान्वयः। उद्देश्यतावच्छेदके नीले

विभक्त्यर्थः। नीलपदसमभिव्याहारान्नीलभेदत्वावच्छिन्नाभावः प्रतीयते इति वाच्यम्। पदार्थद्वयसंसर्गभानस्यैवाकाङ्क्षानियम्यत्वान्नीलभेदत्वावच्छिन्नप्रतियोगितान्तर्भावेण वृत्तिं विना भेदरूपपदार्थतावच्छेदकस्याभावे तादृशसम्बन्धेन भानासम्भवात्। मैवम्। भेदोऽभावश्च विशेषणविभक्तेरर्थः। विशिष्टलाभस्त्वाकाङ्क्षा-

---

विधेयभूतनीलभेदाभावात्। तयोर्भेदस्य शाब्दबोधे हेतुत्वात्। अन्यथा घटो घटत्ववानिति प्रतीत्यापत्तेः। अत एव नीलभेदत्वावच्छिन्नाभावेऽपि वृत्तित्वसम्बन्धेनान्वयोऽपि न। न च भेदप्रतियोगिकाभाव एव विभक्त्यर्थः। भेदे च नीलस्य स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेनान्वयः। नीलपदसमभिव्याहाररूपाकाङ्क्षावलाच्च भेदस्य पदार्थैकदेशस्य स्वनिष्ठनीलभेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावेऽन्वयः। तथा च नीलभेदत्वावच्छिन्नाभावस्य नाप्रसिद्धिः। अवच्छेदकप्रवेशाच्च नोभयाभावमादाय नीलं जलमित्यस्य प्रामाण्यं पीतो घट इत्यादौ च पीतपदसमभिव्याहारात् पीतभेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वय इति सर्वमुपपन्नम्।

पदार्थद्वयसंसर्गभानस्यैवेत्यादि। एकपदार्थेऽपरपदार्थस्यैव संसर्गस्याकाङ्क्षाभास्यत्वनियमात् भेदरूपपदार्थैकदेशस्याभावरूपपदार्थैकदेशे नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वसंसर्गस्य नीलपदसमभिव्याहाररूपाकाङ्क्षाभास्यत्वासम्भवात्। नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वस्य भानाय विभक्त्यर्थतावच्छेदककोटावेव प्रवेशः कर्त्तव्यः। तथा च पूर्वोक्तेऽनन्वय एवेति भावः। मैवमिति। भेदप्रतियोगिकाभावरूपविशिष्टस्य विभक्त्यर्थत्वे एव भेदादेः पदार्थैकदेशत्वं स्यात्तदेव नेत्याह—भेदोऽभावश्चेति। तथा चोभयोः पदार्थत्वात् प्रकृत्यर्थस्य नीलादेर्भेदपदार्थे नीलत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयः। भेदस्य चाभावपदार्थे स्वनिष्ठनीलभेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयः। नीलपदसमभिव्याहाररूपाकाङ्क्षाबलादित्याह—विशिष्टलाभस्त्विति। नीलभेदत्वावच्छिन्नप्रतियोगिता-

दिवशात् । एतेन भेदे नीलादिपदार्थान्वये एकदेशान्वयप्रसङ्ग इत्यपि निरस्तम् । न च विशेषणविभक्तेरभेदार्थकत्वमते नीलं घट इत्यादावप्यभेदान्वयबोधापत्तिर्धान्येन धनवानित्यादौ तृतीयया अभेदबोधनात् अभेदप्रकारकबोधे विरुद्धविभक्तिराहित्यस्यानपेक्षणादिति वाच्यम् । द्वितीयादिनाऽभेदबोधने द्वितीयाद्यन्तवि-

काभावलाभस्त्वित्यर्थः । इत्यपि निरस्तमिति । भेदस्य विभक्तिजन्योपस्थितीयमुख्यविशेष्यताश्रयत्वरूपपदार्थतया पदार्थैकदेशत्वाभावान्नैकदेशान्वय इति भावः । विशेषणविभक्तेरभेदार्थकत्वमते इति । अनेन ग्रन्थेनाभेदसंसर्गकबोधाभ्युपगमे नायं दोष इति लभ्यतेऽन्यथा विशेषणविभक्तेरभेदार्थकत्वेतिविशेषोक्तेरसङ्गत्यापत्तेस्तन्नोपपद्यते । संसर्गतामते धान्येन धनवानित्यादावप्यभेदसंसर्गकबोध एव वक्तव्यस्तथा च संसर्गतया भाने समानविभक्तिकत्वस्यानियामकत्वात् तन्मतेऽपि नीलं घट इत्यादावापत्तिसम्भवाद्विशेषणविभक्तेरभेदार्थकत्व इत्यसङ्गतमेवेति चेत्—न । संसर्गतया भाने स्तोकं पचतीत्यादेरिव धान्येन धनवानित्याकाङ्क्षाया नियामकत्वेऽपि नीलं घट इत्याकाङ्क्षाया अनियामकत्वेन दोषाभावात् । प्रकारतामते एव दोषस्य सत्त्वेन विशेषोक्तेरावश्यकत्वात् । नीलं घट इत्यादावप्यभेदान्वयबोधापत्तिरिति । नीलप्रतियोगिकभेदाभावविशिष्टो घट इति बोधापत्तिरित्यर्थः । नन्वभेदप्रकारकबोधेऽपि समानविभक्तिकत्वरूपविरुद्धविभक्तिराहित्यस्यापेक्षणान्नापत्तिरित्यत आह—धान्येनेत्यादि । द्वितीयादिनेति । प्रथमार्थाभेदप्रकारकबोधे प्रथमान्तविशेष्यवाचकपदसमभिव्याहारः कारणमित्यादिरीत्या कार्य्यकारणभाव इति भावः ।

नन्वादिपदेन सर्वासां विभक्तीनां ग्रहणे धान्येन धनवानित्यादावभेदान्वयबोधानापत्तिः । तृतीयातिरिक्तानां तासां ग्रहणे तृतीयार्थाभेदप्रकारकबोधे तृतीयान्तविशेष्यवाचकपदसमभिहारस्यानपेक्षणात् । नीलेन

शेष्यवाचकपदसमभिव्याहारस्य प्रयोजकत्वमित्युपगमात् । अथ प्रमेयो घट इत्यादौ प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्या

---

घट इत्यत्राप्यभेदबोधापत्तिः । न च धान्येन धनवानितिवन्नीलेन घट इत्यपीष्यत एवेति वाच्यं, 'प्रकृत्यादिभ्य उपसंख्यान'मितिवार्त्तिकेतरस्याभेदे तृतीयाविधायकशास्त्रस्याभावात् । तत्र वार्त्तिकं सर्वविभक्त्यपवादभूतमत एव प्रकृत्या चारुः, गोत्रेण गार्ग्यः, समेनैति, विषमेनैतीत्यादौ प्रकृतेश्चारुः, प्रकृतिश्चारुः, गोत्रो गार्ग्यः, सममेति, विषममेतीत्यादयो न प्रयोगाः । तथा च यत्र तृतीयातिरिक्ता विभक्तिर्न प्रामाणिकी तत्रैव 'प्रकृत्यादिभ्य' इति वार्त्तिकं प्रवर्त्तत इति निश्चीयते । अत्र च नीलो घट इति प्रयोगे प्रथमायाः प्रामाणिकत्वं सर्वैरवगम्यते तस्मान्न प्रकृत्यादिपदेन नीलादीनां ग्रहणमिति नीलेन घट इति प्रयोगो न प्रामाणिकः । इदानीं नीलेन घट इत्यस्यापि बोधजनकत्वेन प्रामाणिकत्वापत्तिरिति चेत्—न । 'प्रकृत्यादिभ्य उपसंख्यान'मितिवार्त्तिकविहिततृतीयातिरिक्ततृतीयार्थाभेदप्रकारकबोधे तृतीयान्तविशेष्यवाचकपदसमभिहारः कारणमिति कार्य्यकारणभावकल्पनेन नीलेन घट इत्यादावापत्त्यभावात् ।

अथ प्रमेयो घट इति । विभक्त्यर्थे भेदे प्रकृत्यर्थस्य प्रमेयत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भेदस्य च प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावेऽन्वयः कार्य्यः । स च न सम्भवति । भेदस्य हि प्रतियोगितावच्छेदकेन सह विरोधात् सर्वत्र प्रमेयत्वस्य सत्त्वेन प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्धिरित्याह— प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्येति । कम्बुग्रीवादिमति कम्बुग्रीवादिमत्वं घटत्वञ्च वर्त्तते । कम्बुग्रीवादिमति या भेदीया प्रतियोगिता तदवच्छेदकं लाघवात् घटत्वमेवेत्येवं रीत्या लघुधर्म्मसमनियतगुरुधर्म्मस्य प्रतियोगितानवच्छेदकत्वं तथा च कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्या कम्बु-

लघुधर्मसमनियतगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वे कम्बुग्रीवादिमान् घट इत्यादावपि कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्धया विशेषणविभक्तेरभेदार्थकत्वासम्भवः। एवं नीलपटादिपरनीलादिपदघटितस्य नीलो घट इत्यादिवाक्यस्यापि प्रामाण्यापत्तिः। नीलत्वादिना पटादेर्भेदाभावस्य नीलघटादौ सत्त्वात्। एतेन विशेषणतावच्छेदकीभूतनीलत्वप्रमेयत्वादिकमेव विशेषणविभक्त्यर्थः, नीलत्वादेर्नीलत्वावच्छिन्नभेदाभावरूपतयाऽभेदार्थकत्वप्रवादोपपत्तिरित्यपि निरस्तम्। नीलत्वादौ नीलत्वादिमतः स्ववृत्तित्वसम्बन्धेनान्वये आकाङ्क्षाविरहाच्च। यथा हि तद्विशिष्टे अधिकरणे आश्रयतया तदन्वयोऽनुभवविरुद्धः तथा तद्धर्मे आधेयतया तद्धर्मवदन्वयोऽपि। अत एव कर्म गच्छतीति वाक्यस्य निराकाङ्क्षता। न चैवं संसर्गतामतेऽप्यनिस्तारः।

---

ग्रीवादिमान् घट इत्यादिवोधानुपपत्तिरित्याह—लघुधर्मसमनियतेत्यादि।

प्रामाण्यापत्तिरिति। नीलपटगतनीलत्वं नीलगुण एव। स च नीलघटगतनीलगुणाद्भिन्न एव। तथा च नीलत्वावच्छिन्ननीलपटनिष्ठप्रतियोगिताकभेदाभावो नीलघटनिष्ठनीलगुणस्वरूपस्तस्य घटेऽसत्त्वेन कथं नीलपटपरनीलपदघटितनीलो घट इति वाक्यस्य प्रामाण्यापत्तिरिति न वाच्यम्। पटरूपद्रव्यपरद्रव्यपदघटितस्य द्रव्यं घट इति वाक्यस्योपलक्षणीयत्वात् नीलत्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्यैव नीलत्वपदेन ग्रहणाद्वा तस्याधिकरणत्वस्य चैक्यात्। एतेनेति। तृतीयदोषस्य सत्त्वेनेत्यर्थः। नीलत्वादौ नीलत्वादिमत इति। अत एव नीलस्य नीलत्वमित्यादावन्वयवोधो न। तद्विशिष्टे अधिकरण इति। नीलो नीलत्ववानित्यादाविति वोध्यम्। अत एवेति। कर्म गच्छतीत्यादिवाक्यात् कर्मत्वविशिष्टस्य प्रकृत्यर्थस्य वृत्तित्वसम्बन्धेन द्वितीयार्थकर्मत्वे अन्वयवोधाभावादिति भावः। न चैवं संसर्गता-

नीलो घट इत्यादौ स्ववृत्तिनीलत्वादेः संसर्गतास्वीकारे उक्तस्थले प्रामाण्यापत्तेर्दुर्वारत्वादिति वाच्यम्। स्ववृत्तिनीलत्वादेः स्वस्मिन्नेव सम्बन्धतोपगमेन पटादिवृत्तिनीलत्वादेर्घटादौ पटादिसम्बन्धताविरहेण तादृशातिप्रसङ्गाभावात्।

वस्तुतस्तु तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एव नीलत्वादिप्रकारेण भासमानानां तत्तद्व्यक्तीनां स्वस्मिन् सम्बन्धतया भासते इति न काप्यनुपपत्तिः। सम्बन्धता च तस्य भेदप्रतियोगिताकाभा-

---

मतेऽप्यनिस्तार इति। तन्मतेऽपि प्रामाण्यापत्तिरूपदोषानुद्धार एवेत्यर्थः। तदेवोपपादयति—नीलो घट इत्यादिना। उक्तस्थल इति। नीलपटपरनीलपदघटितनीलो घट इत्यादावित्यर्थः। संसर्गतामतेऽपि नीलभेदाभावरूपनीलत्वस्यैव संसर्गता नीलत्वस्य च नीलपट इव नीलघटेऽपि सत्त्वादुक्तदोषस्तदवस्थ एवेति भावः। स्ववृत्तिनीलत्वादेः स्वस्मिन्नेव सम्बन्धतोपगमेनेति। उक्तस्थले च पटवृत्तित्वविशिष्टनीलत्वमेव संसर्गः। तच्च पटे एव न घटे इति नोक्तदोष इति भावः। तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एवेति। तथा च नीलपटपरनीलपदघटितस्य नीलो घट इति वाक्यस्य न प्रामाण्यापत्तिः। पटगततद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्यैव घटे सत्त्वेन तदभावरूपसम्बन्धस्य तत्राभावात्। भेदप्रतियोगिकाभावत्वेनेति। ननु भेदत्वावच्छिन्नप्रतियोगिताकाभावत्वेन न संसर्गता तद्धर्मस्याप्रसिद्धत्वात्। भेदनिष्ठप्रतियोगिताकाभावत्वस्य प्रसिद्धत्वेऽपि तस्य तद्व्यक्तिभेदघटोभयाभावेऽपि सत्त्वेन तस्यापि संसर्गत्वापत्तौ तस्य चोभयाभावस्य घटेऽपि सत्त्वेनोक्तवाक्यस्य प्रामाण्यं दुर्वारमेवेति तद्व्यक्तिभेदत्वावच्छिन्नप्रतियोगिताकत्वेनैव संसर्गताया वक्तव्यतया कथमत्रांशे औदासिन्यमिति चेत्—न। भेदप्रतियोगिकाभावत्वेन सामान्यरूपेणापि तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभावस्यैवोभयाभावभिन्नस्य संसर्गत्वोपगमात्।

वत्वेन तत्तद्व्यक्तिभेदप्रतियोगिताकाभावत्वेन वेत्यन्यदेतत्। न चैवं विशेषणविभक्तेरभेदार्थकत्वमतेऽपि तत्तद्व्यक्तित्वावच्छिन्नाभेद एव विभक्त्यर्थो वक्तव्य इति वाच्यम्। तथा सत्यपूर्वव्यक्तिनिष्ठतत्तद्व्यक्तित्वस्य कथंचिदपि भानासम्भवेन तदवच्छिन्नभेदाभावे शक्तिग्रहासम्भवेनापूर्वव्यक्तीनामभेदान्वयबोधानुपपत्तेः। संसर्गज्ञानस्य विशिष्टबुद्धावहेतुत्वेनानुपस्थितस्यापि संसर्गतया भानसम्भवेन संसर्गतामतेऽनुपपत्त्यभावात्। न च विभक्त्यर्थेऽपि भेदे

---

अतिप्रसक्तधर्मस्यापि विषयतात्मकसंसर्गताया अवच्छेदकत्वात्। अन्यदेतदिति। अतिप्रसक्तेन भेदप्रतियोगिकाभावत्वेन अनतिप्रसक्तेन तद्व्यक्तित्वावच्छिन्नप्रतियोगिकाभावत्वेन वा अस्तु संसर्गता परन्तु सा प्रदर्शितविशेषाभावनिष्ठैवेति कस्मिन्नपि पक्षे दोषाभावेन यथेच्छसि तथास्त्विति भावः। तथा सतीति। तस्य विभक्त्यर्थत्वे सतीत्यर्थः।

अपूर्वव्यक्तिनिष्ठेति। तद्व्यक्तित्वभेदेन तद्घटितस्य धर्मस्यापि भिन्नत्वेन तत्तत्सकलधर्मावच्छिन्ने विभक्तेः शक्तिस्वीकारे श्यामः पुत्रो भवितेत्यादौ भाविपुत्रगततद्व्यक्तित्वघटितधर्मे विभक्तेर्व्यवहाराभावेन तद्धर्मावच्छिन्ने विभक्तिशक्तेर्ग्रहाभावेन बोधानापत्तेरिति भावः। न च संसर्गतयाऽप्यनुपस्थितस्य तस्य कथं भानमत एव संसर्गेऽपि मीमांसकैः शक्तिः स्वीक्रियत इति वाच्यम्। मीमांसकमतं निराकृत्यानुपस्थितस्यापि पदार्थद्वयसंसर्गस्य संसर्गमर्य्यादया भानस्य नैयायिकैर्व्यवस्थापितत्वात्।

संसर्गतामतेऽनुपपत्त्यभावादिति। न च शाब्दबोधे संसर्गमर्य्यादया अनुपस्थितस्य तस्य भानेऽपि नीलो घट इति वाक्यं तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावसम्बन्धावच्छिन्ननीलनिष्ठप्रकारताकबोधेच्छयोच्चरितमित्याकारकतात्पर्य्यज्ञानस्य नीलो घट इति वाक्यजन्यशाब्दबोधे कारणत्वं वक्तव्यम्। तात्पर्य्यज्ञाने च अवच्छिन्नत्वांशे प्रकारतयैव तस्य भानेन तद्-

तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नीलत्वादिना तत्तद्व्यक्तीनामन्वयः। तादृशभेदानामपि तत्तद्व्यक्तिभेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावेऽन्वय उपेयते। तावतैव तत्तद्व्यक्तित्वावच्छिन्नाभेदलाभ इति न किंचिदनुपपन्नमिति वाच्यम्। विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगिताया

---

घटिततात्पर्य्यज्ञाने तज्ज्ञानस्य हेतुत्वेन तस्यानुपस्थितौ तात्पर्य्यज्ञानासम्भवेन शाब्दबोधानुपपत्तिरेवेति वाच्यम्। न च नीलो घट इति बोधनेच्छयोच्चरितमिदं वाक्यमित्याकारकस्य तात्पर्य्यज्ञानस्य संसर्गतयैव संसर्गावगाहिनः कारणत्वमस्तु तथा चानुपस्थितस्यापि तद्व्यक्तित्वस्य संसर्गघटकतया भाने न बाधकमिति वाच्यम्। अपूर्ववाक्यार्थस्थले शाब्दबोधात् प्राक् तादृशवाक्यार्थाप्रसिद्धेस्तात्पर्य्यग्रहे ज्ञानविशेषणतया वाक्यार्थस्य भानासम्भवादिति वाच्यम्। स्वनिरूपितसांसर्गिकविषयतानिरूपितघटादिनिष्ठविषयताकत्वसम्बन्धेन नीलनिष्ठप्रकारताविशिष्टज्ञानजनकत्वेनोच्चरितमित्याकारकतात्पर्य्यज्ञानस्य कारणत्वेनापूर्ववाक्यार्थस्थलेऽपि तादृशज्ञानसम्भवेन तद्व्यक्तित्वोपस्थितेरनपेक्षणादिति ध्येयम्।

न च विभक्त्यर्थेऽपि भेद इति। अयं भावः। अभेदस्य विभक्त्यर्थत्वेऽपि दोषाभावः। तथा हि भेदोऽभावश्च विशकलित एव विभक्त्यर्थोऽस्तु नीलादेश्च तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भेदेऽन्वयः। भेदस्य च तद्व्यक्तिभेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावेऽन्वयः। तथा च तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभावो लभ्यत इति न पूर्वोक्तदोषावसरः। तद्व्यक्तित्वस्य संसर्गघटकतयैव भानेनानुपस्थितत्वेऽपि क्षत्यभावात्। विशेषणतावच्छेदकावच्छिन्नाया इति। प्रतियोगिविशेषणतया भासमानधर्म्मावच्छिन्नप्रतियोगिताया एव प्रतियोगिनोऽभावे संसर्गतया भानं भवतीत्यर्थः। तथा च नीलत्वेन भासमाननीलादेर्भेदे

अभावे प्रतियोगिनः सम्बन्धतया भानात्। अन्यथा विशिष्टवैशिष्ट्यबुद्धित्वानुपपत्तिः। प्रतियोगिविशेषिताभावज्ञानं च विशिष्टवैशिष्ट्यबोधमर्यादान्नातिशेत इति दर्शनात्केवलं विशेष्ये विशेषणमिति रीत्या न कश्चिदभ्युपैतीति चेत्—सत्यम्।

अभेदस्तादात्म्यम्। तच्च स्ववृत्त्यसाधारणो धर्मः। असाधारण्यं च एकमात्रवृत्तित्वम्। तच्च स्वसामानाधिकरण्यस्वप्रति-

---

नीलत्वावच्छिन्नप्रतियोगिताया एव संसर्गत्वं न तु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताया इत्यर्थः।

विशिष्टवैशिष्ट्यबुद्धित्वानुपपत्तिरिति। विशेषणविशेषणतावच्छेदकोभयप्रतियोगिकसम्बन्धद्वयावगाहिबुद्धित्वं विशिष्टवैशिष्ट्यबुद्धित्वम्। तथा च नीलो घट इत्यादौ विभक्त्यर्थभेदे नीलस्य स्वप्रतियोगिकत्वं नीलत्वस्य च स्वावच्छिन्नप्रतियोगिताकत्वं संसर्ग एव स्यादित्यर्थः। अन्यथा घटसत्त्वेऽपि घटाभाववत्ताबुद्धिप्रसङ्गात्। द्वित्वावच्छिन्नप्रतियोगिताकस्यान्यतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकस्य च घटाभावस्य घटसत्त्वेऽपि सत्त्वात्। प्रतियोगिविशेषिताभावेति। प्रतियोगिना विशेषितो योऽभावस्तज्ज्ञानं घटाभावः घटो नास्तीत्याकारकज्ञानमित्यर्थः। नातिशेत इतीति। निरुक्तविशिष्टवैशिष्ट्यबुद्धित्वं न जहातीत्यर्थः। केवलं विशेष्ये विशेषणमितीति। अभावे विशेष्ये प्रतियोगितया घटो विशेषणं घटे च समवायेन घटत्वं विशेषणमितिरीत्येत्यर्थः। प्रतियोगितायां प्रतियोगिविशेषणधर्म्मावच्छिन्नत्वं विहायेति यावत्।

एकमात्रवृत्तित्वमिति। तच्चैकवृत्तित्वे सति एकेतरावृत्तित्वरूपमिति यथाश्रुतन्तु न युक्तम्। एकत्वस्य केवलान्वयित्वेन एकेतरत्वस्याप्रसिद्ध्या तस्याप्रसिद्धत्वात्। स्वसामानाधिकरण्येति। स्वं भेदः यथा घटे योऽन्यघटव्यक्तेर्भेदः स स्वं तत्सामानाधिकरण्यं तत्प्रतियोगिवृत्तित्वञ्च घटत्वे इति

योगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत्तदन्यत्वमित्येकमात्रवृत्तिधर्म एव विशेषणविभक्तेरर्थः। वृत्तिश्च तत्र प्रकृत्यर्थस्य संस-

---

भेदविशिष्टमेव घटत्वमेवमेवोभयवृत्तिः सर्वोऽपि धर्म्मो भेदविशिष्टस्तदन्यत्वं तद्व्यक्तित्वे एव। यथा प्रतियोगिभूतघटव्यक्तिगततद्व्यक्तित्वे तादृशभेदप्रतियोगिवृत्तित्वेऽपि तद्भेदसामानाधिकरण्यन्नास्ति। अनुयोगिघटगततद्व्यक्तित्वे च तद्भेदसामानाधिकरण्येऽपि प्रतियोगिवृत्तित्वन्नास्तीति भेदविशिष्टभिन्नत्वं बोध्यम्। अथ प्रतियोगिभूतघटगततद्व्यक्तित्वस्याप्यनुयोगिनि कालिकसम्बन्धेन सत्त्वात्। अनुयोगिघटगततद्व्यक्तित्वस्य तेन सम्बन्धेन प्रतियोगिनि सत्त्वात्तद्व्यक्तित्वमपि भेदविशिष्टमेव। स्वरूपसम्बन्धावच्छिन्नवृत्तिताया निवेशे समवायेन वृत्तित्ववतां घटत्वादीनामपि भेदविशिष्टान्यत्वापत्त्या भिन्ननीलघटपरनीलपदघटितस्य नीलो घट इत्यादेरपि प्रामाण्यापत्तेः। कालिकान्यसम्बन्धावच्छिन्नवृत्तिताया निवेशे घटगततद्व्यक्तित्वविषयकज्ञानप्रतियोगिको यो घटे भेदस्तद्विशिष्टत्वमेव घटगततद्व्यक्तित्वे तस्य स्वरूपसम्बन्धेन अनुयोगिनि घटे विषयितासम्बन्धेन प्रतियोगिनि ज्ञानेऽपि सत्त्वात्। न च तस्य सम्बन्धस्य वृत्तित्वानियामकत्वं ज्ञाने घट इति प्रतीतेरिति भेदविशिष्टान्यत्वाप्रसिद्धिरिति चेत्—अत्रोच्यते। भेदविशिष्टान्यघटकवृत्तित्वस्य स्वरूपसम्बन्धावच्छिन्नस्यैव ग्रहणमिति कालिकसम्बन्धमादाय नाप्रसिद्धिर्नापि घटत्वादेरपि भेदविशिष्टान्यत्वेन विभिन्नघटपरस्य नीलो घट इति वाक्यस्य प्रामाण्यापत्तिः। भेदविशिष्टान्त्वे विभक्त्यर्थे स्वरूपसम्बन्धावच्छिन्नाधेयत्वस्यैव प्रकृत्यर्थसंसर्गतया भानोपगमाद्घटत्वादिरूपभेदविशिष्टान्यस्य विभक्त्यर्थत्वेऽपि निरुक्ताधेयत्वसम्बन्धेन प्रकृत्यर्थान्वयस्य तत्र बाधेन तदादायापत्त्यसम्भवात्। न च घटे यः पटत्वाभावस्तत्र यो घटभेदः स अभावात्मक एव अभावाधिकरणकाभावस्याधिकरणात्मकत्वाभ्युपगमात्। तथा च घटगततद्व्यक्तित्वे घटभेदप्रतियोगिवृत्तित्वस्य तद्भे-

-र्गमर्यादया भासते । तादृशधर्मस्तत्तद्व्यक्तित्वादिरूप एव ।

-दात्मकाधिकरणीभूताभावसामानाधिकरण्यस्य च सत्त्वेन तद्व्यक्तित्वस्यापि भेदविशिष्टत्वमेव । एवं स्वस्मिन्नपि पूर्वक्षणवृत्तित्वविशिष्टस्वभेदस्य सत्त्वेन तद्भेदविशिष्टत्वमपि तद्व्यक्तित्वे इति भेदविशिष्टान्यत्वमप्रसिद्धमेवेति वाच्यम् । स्वात्मकतत्स्वपर्य्याप्तावच्छेदकताकप्रतियोगितानिरूपकतावच्छेदकभेदत्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयवृत्तित्वाभेदसंबन्धेन धर्म्मविशिष्टान्यत्वस्यैव विवक्षितत्वात् । अभावाधिकरणकभेदस्याभावात्मकत्वेऽपि तन्निष्ठाभावत्वावच्छिन्नाधेयतानिरूपितैवाधिकरणता घटे न तु घटगततद्व्यक्तित्वावच्छिन्नप्रतियोगितानिरूपकतावच्छेदकीभूतभेदत्वावच्छिन्नाधेयतानिरूपिताधिकरणतेति नाद्यरीत्या दोषः । नाप्यन्त्यरीत्या दोषस्तत्र पूर्वक्षणवृत्तित्वविशिष्टतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदमादायैव दोषो वाच्यः । स न सम्भवति । पूर्वक्षणादेरपि प्रतियोगितावच्छेदककुक्षौ प्रवेशेन तद्व्यक्तित्वपर्य्याप्तावच्छेदकताया अभावात् । नापि तद्व्यक्तिपटोभयन्न सा व्यक्तिरित्युभयभेदमादायापि दोषस्तत्र प्रतियोगितावच्छेदकतायास्तद्व्यक्तित्वपर्य्याप्तत्वाभावात् । अत्र पर्य्याप्तिनिवेशप्रकारस्सर्वोऽप्यनुसन्धेयः ।

न च भेदस्तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावः । तादात्म्यञ्च भेदविशिष्टान्यत्वमित्यन्योन्याश्रय इति वाच्यम् । स्वप्रतियोगिसामानाधिकरण्यस्वसामानाधिकरण्योभयसम्बन्धेनाभावविशिष्टान्यत्वस्य विवक्षितत्वात् । तद्व्यक्तित्वभावमादाय लक्षणसमन्वयः । न चाभावत्वमपि द्रव्यादिषट्कान्योन्याभाववत्त्वमेव । अन्योन्याभावश्च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभाव इति तदवस्थ एवान्योन्याश्रय इति वाच्यम् । अभावत्वस्याखण्डोपाधिरूपत्वात् । नाप्यन्यत्वमादायान्योन्याश्रयः भेदत्वस्याप्यखण्डोपाधित्वादिति दिक् ।

तादृशधर्म्मस्तत्तद्व्यक्तित्वादिरूप एवेति । तादृशो भेदविशिष्टान्यः नीलो

अपूर्वव्यक्तिनिष्ठतादृशधर्मस्य विशिष्यज्ञातुमशक्यत्वेऽप्येकमात्रवृत्तिधर्मत्वादिना सामान्यप्रत्यासत्तितः सुग्रहत्वमेव । अभेदस्य संसर्गतामतेऽप्येतादृशानुगताभेदस्यैव तथात्वमुचितम् । तत्तद्व्यक्तित्वावच्छिन्नभेदाभावकूटस्य विशिष्य तथात्वे घटो न नील

---

घट इत्यादौ तद्व्यक्तित्वं विभक्त्यर्थः । तस्मिन् स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन नीलरूपप्रकृत्यर्थस्यान्वयः । तस्य च स्वरूपसम्बन्धेन घटेऽन्वयः । तथा च नीलवृत्तितद्व्यक्तित्ववान् घट इत्यन्वयबोधः । सुन्दरः पुत्रो भविष्यतीत्यत्र पुत्रगततद्व्यक्तित्वे व्यवहारस्यादर्शनेन तत्र विभक्तेः शक्तिग्रहाभावेन कथन्तस्य शाब्दबोधविषयतेत्यत आह—अपूर्वव्यक्तिनिष्ठेत्यादि । विशिष्येति । स्वरूपतस्तादृशतद्व्यक्तित्वस्येत्यर्थः । एकमात्रवृत्तिधर्मत्वादिनेति । भेदविशिष्टान्यत्वधर्मेणेत्यर्थः । सामान्यप्रत्यासत्तीति । सामान्यधर्मरूपा चक्षुषोऽपूर्वतद्व्यक्तित्वे प्रत्यासत्तिः सन्निकर्ष इत्यर्थः । चक्षुस्सन्निकृष्टे तद्व्यक्तित्वे यदिदं भेदविशिष्टान्यदिति ज्ञानं तत्प्रकारीभूतभेदविशिष्टान्यत्वम् । सकलतद्व्यक्तित्वे इति चक्षुषः स्वजन्यज्ञानप्रकारीभूतभेदविशिष्टान्यत्वरूपधर्म्मवत्त्वस्यापूर्वतद्व्यक्तित्वे सन्निकर्षात् । भेदविशिष्टान्यत्वेन ज्ञायमाने सकलतद्व्यक्तित्वे विभक्तेः शक्तिग्रहात् अपूर्वस्यापि शाब्दबोधविषयतापत्तिरिति बोध्यम् । एतादृशानुगताभेदस्यैवेति । भेदविशिष्टान्यस्यैवेत्यर्थः । तथात्वमिति । संसर्गतात्वमित्यर्थः । विशिष्य तथात्वे इति । तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावत्वेन संसर्गत्वे इत्यर्थः ।

घटो न नील इत्यादीति । अयं भावः । नीलो घट इत्यत्र यदि तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभाव एव नीलस्य घटे संसर्गस्तर्हि नीलो न घट इत्यत्रापि तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावसम्बन्धावच्छिन्नप्रतियोगिताकनीलाभाव एव घटे नञा बोध्येत । न तु तत्र तादात्म्यं विभक्त्यर्थः । नीलस्य वृत्तित्वसम्बन्धेन तादात्म्येऽन्वयं कृत्वा नीलवृत्तिता-

इत्यादिवाक्यजन्यबोधे 'प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमा-वि'ति न्यायेन तादृशाननुगतसम्बन्धावच्छिन्नप्रतियोगिताकाननु-गताभावा एव भासेरन् न तु नीलवृत्तिरेकोऽभावः, तथा सति यत्किंचित्तादृशाभावतात्पर्येण प्रयुक्तस्य नीलेऽपि न नील इत्यादि-वाक्यस्य प्रामाण्यं स्यात् ।

इदन्तु बोध्यम् । विशेषणविभक्तेरभेदार्थकत्वे घटो न नील इत्यादौ नञा नीलाद्यभेदाभाव एव प्रत्याययिष्यते न तु नीलादि-भेदः । यादृशसमभिव्याहारस्थले येन सम्बन्धेन यत्र धर्मिणि येन रूपेण यद्वत्त्वं नञसत्त्वे प्रतीयते तादृशस्थले नञा तद्धर्मिणि तादृ-शसम्बन्धावच्छिन्नतादृशधर्मावच्छिन्नप्रतियोगिताकतदभावबोधस्य व्युत्पत्तिसिद्धत्वात् । प्रतियोग्यभावान्वयौ चेत्यादेरप्ययमेवार्थः ।

---

दात्म्याभाववान् घट इत्याकारको बोधो नञोऽसत्त्वे येन सम्बन्धेन येन रूपेण यद्वत्ता यत्र यादृशसमभिव्याहारात्प्रतीयते तादृशसमभिव्याहारेण नञ्घटितेन तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभाव एव तत्र प्रतीयते । इत्यर्थके 'प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमा' वित्यभियुक्तवचनात् । तथा च तद्व्यक्तित्वभेदेन तद्व्यक्तित्वघटितसम्बन्धस्यापि भेदात् । तत्तत्सम्बन्धा-वच्छिन्नप्रतियोगिताकाभावस्यापि भेदेन नीलेऽपि घटे स्वेतरनीलगततद्व्य-क्तित्वघटितोक्तसम्बन्धस्याभावेन तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभाव-स्य तत्सम्बन्धस्य व्यधिकरणतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्वात्मक-नीलाभावस्य च सत्त्वेन न नील इति प्रयोगापत्तिः । तादात्म्यत्वेन संसर्गत्वे स्वकीयसंयोगेन वह्निमति अन्यदीयसंयोगस्याभावेऽपि संयोगेन वह्निर्नास्तीति यथा न भवति तथा तादात्म्येन नीलो नेति न प्रयोग इति । न च तत्तद्व्यक्ति-त्वावच्छिन्नप्रतियोगिताकभेदकूटत्वावच्छिन्नप्रतियोगिताकस्यैकस्यैवाभावस्य संसर्गत्वेन न संसर्गभेदात्तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावभेद इति न नीलेऽपि न नील इति प्रयोगापत्तिः । न च कूटत्वमपेक्षाबुद्धिविषयत्वमेव ।

एवं च नञो भेदबोधकत्वं न कुत्रापि संभवति। अनीलं घटमानयेत्यादौ घटपदसामानाधिकरण्यानुरोधेनानीलपदस्य नीलभिन्नपरतया नञो भेदवत्येव लक्षणाया उपगन्तव्यत्वात्।

---

तच्चापेक्षाबुद्धिभेदेन भिन्नं तदवच्छिन्नप्रतियोगिकाभावोऽपि भिन्न एवेति न संसर्गस्यैक्यमिति वाच्यम्। तत्तत्कूटत्वावच्छिन्नाभावस्य समनियतत्वेन समनियताभावस्य चैक्येन संसर्गभेदाभावात्। संसर्गतावच्छेदकीभूततादृशाभावत्वस्य तद्व्यक्तित्वभेदभिन्नतया तदवच्छिन्नसंसर्गताभिन्नैव स्यादिति न, स्वरूपत एव तादृशाभावस्य संसर्गत्वोपगमात्। संसर्गघटकतद्व्यक्तित्वादेरनुपस्थितत्वेऽपि न क्षतिरनुपस्थितस्यापि संसर्गतया भानस्वीकारादिति वाच्यम्। बहुषु घटेषु बहुनीलतादात्म्यसत्त्वे बहुघटघटकद्वित्रघटेषु स्वानात्मकबहुनीलान्तर्गतद्वित्रनीलतात्पर्येण नीला घटा इत्यापत्तेरित्यलम्।

इदन्तु बोध्यमित्यादेरयमाशयः। यदि नीलो घट इत्यादौ विशेषणविभक्तेस्तादात्म्यमर्थस्तर्हि स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतादात्म्याभाव एव नीलो न घट इत्यादौ नञा बोद्धव्येत। प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति व्युत्पत्तेः। तथा च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपभेदबोधकत्वं नञः सकललोकप्रसिद्धमुच्छिन्नं स्यादिति बोध्यम्। तच्च दतत्तादात्म्याभावयोरैक्येऽपि भेदत्वेन भेदबोधकत्वं न स्यादिति तात्पर्य्यम्।

न च अनीलं घटमानयेत्यादौ तादात्म्यार्थकविभक्त्यभावेन नञो नीलभेदबोधकत्वमेवेति भेदबोधकत्वनोच्छिन्नमित्यत आह-अनीलं घटमानयेत्यादि। घटेन सह सामानाधिकरण्यान्वयानुरोधेनानीलपदस्य नीलभिन्नार्थकत्वं वक्तव्यन्तदर्थञ्च नञो भेदवति लक्षणा वक्तव्या। ततश्च भेदमुख्यविशेष्यकोपस्थितिजनकत्वमुच्छिन्नमेवेति बोध्यम्। अभेदस्य प्रकारत्वे सम्भवत्यपि

इदं तु तत्त्वम् । असमस्तनीलो घट इत्यादिस्थलेऽभेदस्य संसर्गतोपगमेऽपि गौरवविरहात् तत्र विशेषण विभक्तेर्वृत्तिकल्पनमनुचि-

---

संसर्गतयैव भानमुचितमित्याह–इदन्तु तत्त्वमित्यादिना । विशेषणविभक्तेर्वृत्तिकल्पनमिति । संसर्गताभिन्नतन्निष्ठविषयताकशाब्दबोधे वृत्तिज्ञानाधीनतद्विषयकोपस्थितेर्हेतुतयाऽभेदस्य प्रकारतया भानोपगमे विशेषणविभक्तेस्तत्र वृत्तिकल्पनमावश्यकन्तदेव गौरवं संसर्गतया तु आकाङ्क्षयैव भानोपपत्तौ संसर्गतामते तत्र वृत्तिकल्पनं नास्तीति लाघवमिति बोध्यम् । न च संसर्गतामते अभेदसंसर्गकशाब्दबोधस्य नीलस्य घट इत्यादिवाक्यादभावायाभेदसंसर्गकशाब्दबोधे प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानस्य कारणत्वं वाच्यम् । प्रकारतामते च तादृशकार्यकारणभावानभ्युपगमेन संसर्गतामते तादृशाकार्यकारणभावो मन्मते वृत्तिकल्पनमित्युभयोः साम्येन कथं वृत्तिकल्पनमनुचितमिति वाच्यम् । विरुद्धविभक्त्यन्तघटितात् नीलस्य घट इत्यादिवाक्यादभेदप्रकारकबोधवारणाय अभेदप्रकारकबोधवादिनाऽपि तादृशाकाङ्क्षाज्ञानस्य कारणत्वाभ्युपगमेन तदंशे साम्यात् वृत्तिकल्पनस्य गौरवेणानुचितत्वध्रौव्यात् । न च संसर्गतावादिनामपि यत्राभेदे विभक्तेश्शक्तिभ्रमो लक्षणाग्रहो वा तत्राभेदप्रकारक एव बोधस्तैरभ्युपेयः । तथा चान्यत्राभेदसंसर्गकोऽत्राभेदप्रकारको द्विविधो बोध इष्टस्तेषां तादृशोभयबोधस्य नीलस्य घट इत्यादिवाक्याद्वारणाय तत्तद्बोधे आकाङ्क्षाज्ञानस्य कारणत्वे कार्य्यकारणभावद्वयम् । प्रकारतावादे चाभेदसंसर्गबोधस्याभावेन अभेदप्रकारक एक एव बोध इत्याकाङ्क्षाज्ञानस्याभेदप्रकारकबोधस्य च एक एव कार्य्यकारणभाव इति तदंशे लाघवेन वृत्तिकल्पनमनाधिक्येन नानुचितम् । किञ्च संसर्गतावादिमते उक्तयोर्द्विविधबोधयोर्योग्यताज्ञानमपि भिन्नं भिन्नमभेदसंसर्गकबोधे अभेदसंसर्गकनीलप्रकारकम् । अभेदप्रकारकबोधे अभेदनिष्टस्वरूप-

तम् । न च यत्राभेदे विशेषणविभक्तेः शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र सर्वमत एवाभेदप्रकारकबोधस्य नीलो घट इत्यादिवाक्यादुत्पत्त्या तादृशसमभिव्याहारज्ञानस्य द्विविधबोधे हेतुताद्वयं कल्पनीयम्, अभेदस्य संसर्गतावादिनेति गौरवम् । एवं तादृशसमभिव्याहारज्ञानघटितसामग्र्या भिन्नयोग्यताज्ञानघटितत्वेन द्वैविध्यमिति भिन्नविषयकप्रत्यक्षादिकं प्रति तादृशशाब्दसामग्रीप्रतिबन्धकताया अप्याधिक्यमिति वाच्यम् । अभेदस्य संसर्गतावादिनोक्त-

---

सम्बन्धावच्छिन्नप्रकारताकम् । तथा च तद्घटितसामग्र्यपि भिन्ना । तयोश्च भिन्नविषयकप्रत्यक्षम्प्रति प्रतिबन्धकताद्वयम् । प्रकारतामते च एक एवाभेदप्रकारको बोधः । योग्यताज्ञानमप्येकमेवाभेदप्रकारकम् । तद्घटिता एकैव सामग्री । तस्या भिन्नविषयकप्रत्यक्षं प्रति एकैव प्रतिबन्धकतेति प्रतिबध्यप्रतिबन्धकभावेऽपि लाघवाद्वृत्तिकल्पनं नानुचितमित्याह—न च यत्रेत्यादिना वाच्यमित्यन्तेन । यदि च नीलो घटः श्यामो घट इति वाक्यद्वयजन्यैकाकारकबोधोदयेनाकाङ्क्षाज्ञानस्य द्वैविध्येन च परस्परजन्यबोधे व्यभिचारवारणाय कार्यतावच्छेदककोटौ कारणानन्तर्य्यनिवेशस्यावश्यकत्वेन तदेव जन्यतावच्छेदकमस्तु । विषयतानिवेशश्च मास्तु । स्वोत्तरशाब्दबोधे नीलो घट इत्याकाङ्क्षाज्ञानं कारणं स्वोत्तरशाब्दबोधे श्याम घट इत्याकाङ्क्षाज्ञानं कारणमितिरीत्यैव कार्यकारणभावो वक्तव्य इति बोधस्य द्वैविध्येऽपि एक एव कार्य्यकारणभावः । संसर्गतामतेऽपि अत एव भेदान्वयप्रकरणे पर्य्यायस्थले व्यभिचारवारणायानयैव रीत्या विषयतामनिवेश्य एक एव कार्यकारणभावः स्वीकृत इति मन्यसे । तथाऽपि प्रतिबन्धकताद्वयं संसर्गतावादिमतेऽवश्यमित्याह—एवमिति । वस्तुतस्तु विषयविशेषविषयकशाब्दबोधे आकाङ्क्षाज्ञानस्य कारणत्वाभावे विषयविशेषविषयकशाब्दबोधार्थिनो वाक्यविशेषोच्चारणे एव प्रवृत्तिरिति नियमानुपपत्त्या कार्यतावच्छेदककोटौ विषयतानिवेश आवश्यक एवेति बोध्यम् । उक्त-

स्थलेऽपि तत्संसर्गकबोधस्यैवोपगमादिति दिक् । स्तोकं पचति मृदु पचतीत्यादौ विरुद्धविभक्त्यवरुद्धपदोपस्थापितस्यापि स्तोकमृद्वादेर्धात्वर्थपाकादावभेदान्वयोऽपि व्युत्पत्तिसिद्धः, तदनुरोधेन च द्वितीयान्तपदधातुपदयोः समभिव्याहारस्याप्यभेदान्वयबोधौपयिकाकाङ्क्षात्वमुपगम्यते क्रियाविशेषणस्थले च न द्वितीयातिरिक्तविभक्तिरुत्पद्यते, क्रियाविशेषणानां कर्मत्वमित्यनुशासनेन तत्र कर्म-

---

स्थलेऽपीति । शक्तिभ्रमलक्षणाग्रहस्थलेऽपीत्यर्थः । तत्संसर्गकेति । अभेदसंसर्गकेत्यर्थः । तथा च न कार्य्यकारणभावद्वयमिति बोध्यम् । न च विभक्तिनिष्ठवृत्तिज्ञानाधीनोपस्थितीयसंसर्गताभिन्नविषयतायाः शाब्दबोधीयप्रकारताविशेष्यतान्यतरविषयताप्रयोजिकायाः सत्त्वे कस्यचिदिच्छामात्रेण विभक्त्यर्थस्य संसर्गतया भानन्नोचितमिति वाच्यम् । शाब्दबोधे तात्पर्य्यज्ञानस्याऽपि कारणतया तत्संसर्गकबोधस्यैवानादितात्पर्य्यकल्पनात् । वस्तुतस्तु अभेदप्रकारकबोधस्यैव भेदान्वयप्रकरणे सिद्धान्तयिष्यमाणत्वेन प्रकृतग्रन्थस्य धूलीप्रक्षेपमात्रत्वात् । द्वितीयान्तपदधातुपदयोरिति । अभेदान्वयबोधे द्वितीयान्तस्तोकादिपदसमभिव्याहृतपचत्यादिपदत्वरूपाकाङ्क्षाज्ञानं कारणमेवं रीत्या कार्यकारणभावो वक्तव्यः । इदमुपलक्षणम् । यादृशयादृशसमभिव्याहारादभेदान्वय इष्यते तादृशतादृशसमभिव्याहारस्य कारणत्वं वक्तव्यम् । यथा वेदाः प्रमाणं सोमेन यजेदित्यादौ । क्रियाविशेषणानामिति । न च स्तोकं पचतीत्यादौ धात्वर्थफलस्य व्यपदेशिवद्भावेन फलाश्रयत्वात् । तादात्म्यफलतावच्छेदकसम्बन्धान्यतरसम्बन्धेन फलाश्रयस्य कर्त्तुरित्यनेन कर्मत्वमिति स्वीकारेणैवोपपत्तावपूर्वस्यातिदेशवचनस्य स्वीकारो व्यर्थः । स्तोकं तिष्ठतीत्यादौ फलस्यापि धात्वर्थत्वोपगमेन न दोषः । न च तर्हि सकर्मकत्वापत्तिः । स्वार्थफलजनकव्यापारवाचकत्वस्यैव सकर्मकत्वादिति वाच्यम् । स्वार्थफलव्यधिकरणव्यापारवाचकत्वं तत् । स्था-

त्वातिदेशात् । न चैवं स्तोकः पाक इत्यादावपि द्वितीयाप्रसङ्गस्तत्रापि स्तोकादेः क्रियायामेव विशेषणत्वात्। भावक्तां प्रयोगसाधुत्वमात्रार्थकतया धातुनैव तत्र पाकादिप्रतिपादनादिति वाच्यम्। क्रियापदस्य तत्र सार्थकप्रत्ययान्तधातूपस्थाप्यार्थपरत्वात् । स्तोकं

---

धात्वर्थयोः फलव्यापारयोस्सामानाधिकरण्यादिति वाच्यम् । गौरवात् स्तोकः पच्यत इति स्तोकरूपे कर्मणि लकारापत्तेश्च । वस्तुतस्तु वचनकल्पनगौरवापेक्षया निरुक्तगौरवस्याल्पत्वम् । लः कर्मणीत्यत्र कर्तृसाहचर्येण धात्वर्थे भेदान्वयिनि कर्मण्येव लकारो विधीयत इति स्तोकादिकर्मणि लकारापत्तिरपि न, कर्मत्वातिदेशेऽपि लकारापत्तिवारणस्य प्रकारान्तरेणाशक्यत्वाच्चेति वैयाकरणमतमेव युक्तम् ।

क्रियापदस्येत्यादि । पाक इत्यत्र भावानुशिष्टघञो निरर्थकत्वेन पाकक्रियायास्सार्थकप्रत्ययान्तधातूपस्थाप्यत्वाभावान्न स्तोकः पाक इत्यादौ स्तोकस्य कर्मत्वम् । ननु शक्तिमत्वञ्चेत्सार्थकत्वं तर्हि करणाधिकरणयोः रागो रङ्ग इत्यादौ घञा बोधेन घञ्त्वेन करणाधिकरणनिरूपितशक्ततायाआवश्यकत्वेन घञ्मात्रस्य शक्तिमत्वे न निरर्थकघञोऽप्रसिद्धिः । न चाकर्तरि च कारके संज्ञायामित्यनुशासने संज्ञायामित्युक्त्या संज्ञास्थघञ एव शक्तिमत्वन्नासंज्ञास्थस्य पाक इत्यादाविति वाच्यम् । भावे घञ् इत्यनुशासनेन घञ्मात्रस्य भावनिरूपितशक्तिमत्वस्य बोधनात् । संज्ञायामित्यस्य को लाभो लब्ध इत्याद्यनुरोधेन प्रायिकत्वाच्च । न चावोधकस्य पाकशब्दघटकघञो बोधकत्वेन भगवदिच्छाविषयत्वे भगवदिच्छाया अविसम्वादित्वानापत्त्या घञ्मात्रस्य भावबोधकत्वबोधकस्य भावे घञ् इत्यस्याप्रामाण्यापत्त्या चाबोधकपाकशब्दघटकघञ्भिन्नस्यैव घञो भगवदिच्छायां भावे घञ् इति सूत्रे च प्रवेशान्न तत्रत्यघञः शक्तिमत्वरूपसार्थकत्वमिति वाच्यम् । तथा सति स्तोकं स्थीयत इत्यादौ वर्त्तमानत्वाविवक्षास्थले य

स्थीयत इत्यादौ आख्यातस्यापि वर्त्तमानत्वार्थकतया सार्थकत्वात्। न च वर्त्तमानत्वाद्यविवक्षायां द्वितीयानुपपत्तिरिति वाच्यम्।

---

आख्यातस्तस्यापि विसम्वादित्वभयेन वर्तमानवोधकत्वेनाख्यातविषयक-भगवदिच्छायां लटो वर्तमानबोधकत्वबोधके वर्तमाने लडिति सूत्रे चाप्रा-माण्यभयेनाप्रवेशस्यावश्यकत्वेन शक्तिमत्वरूपसार्थकत्वस्याभावेन क्रिया-विशेषणे कर्म्मत्वानापत्तिरिति चेत्-मैवम्। एतदभिप्रायेणैवार्थबोधस्वरूप-योग्यताप्रयोजकाकाङ्क्षाशालित्वरूपसार्थकत्वस्य वक्ष्यमाणत्वात् बोधस्व-रूपयोग्यतारूपार्थवोधकताया आकाङ्क्षाविवक्षाद्यभावस्थलेऽपि सत्त्वेन भग-वदिच्छायाः सूत्रस्य च विसम्वादित्वाप्रामाण्ययोरप्रसक्तेः। वर्तमानत्व-प्रकारकस्थितिविशेष्यकबोधं प्रति स्थाधातूत्तरवर्त्त्याख्यातत्वरूपाकाङ्क्षा-ज्ञानं कारणं तादृश्याश्चाकाङ्क्षाया वर्तमानत्वविवक्षास्थल इवाविवक्षा-स्थलेऽपि सत्त्वे नोभयत्राख्यातस्य सार्थकत्वात्। क्रियाविशेषणस्य कर्म्म-त्वोपपत्तिः। पाक इत्यादौ च घञर्थनिष्ठविषयतानिरूपितधात्वर्थनिष्ठ-विषयताकबोधस्याभावेन तादृशबोधप्रयोजकाकाङ्क्षाया अप्यभावेनार्थव-त्वविरहान्न तत्र कर्म्मत्वम्। न च तादृशार्थबोधप्रयोजकाकाङ्क्षाया अभा-वेऽपि एकत्वनिष्ठविषयतानिरूपितपाकत्वावच्छिन्नविषयतानिरूपकबोध-प्रयोजिका पच्पदोत्तरघञ्पदोत्तरसुपदत्वरूपाऽऽकाङ्क्षा तच्छालित्वरूपसा-र्थकत्वं घञो वर्तेत एवेति वाच्यम्। स्वार्थनिष्ठविषयतानिरूपितप्रकृत्यर्थ-निष्ठविषयताप्रयोजकाकाङ्क्षाशालित्वमेव प्रत्यये सार्थकत्वमित्यस्य स्वी-कारात्। स्वं सार्थकत्वेन विवक्षितः प्रत्ययः प्रकृते घञर्थविषयकबोधस्यैव पाकपदादभावेन निरुक्तसार्थकत्वस्याभावादिति दिक्।

ननु स्तोकं स्थीयत इत्यादिभावाख्यातस्थलेऽपि कर्तृकर्म्मभावावबो-धकत्वेनाख्यातस्य सार्थकत्वाभावात्। कथं स्तोकस्य कर्म्मत्वमित्यत आह-वर्तमानार्थकतयेत्यादि। कर्त्राद्यवोधकत्वेऽपि वर्तमानकालबोधकत्वेनैव सार्थ-

वर्तमानत्वादिविवक्षास्थल इव अर्थबोधस्वरूपयोग्यताप्रयोजिकाकाङ्क्षाशालित्वेनैव तदविवक्षास्थलेऽपि भावाख्यातस्यार्थवत्त्वात्।

केचित्तु धातोरिव घञन्तस्यापि पाकादौ शक्तिरुपेयते। अन्यथा सुब्विभक्त्यर्थसंख्याकर्मत्वादीनां तत्र पाकादावन्वयानुपपत्तेः। प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तेर्धातूनां च

---

कत्वोत्पत्तिरिति भावः। ननु वर्तमानकालस्याप्यविवक्षास्थलेऽबोधात् कथं तत्र कर्मत्वमित्यत आह—वर्तमानत्वादिविवक्षास्थल इवेत्यादि। विवक्षाया अभावेन बोधाभावेऽपि बोधप्रयोजकाकाङ्क्षाशालित्वेन सार्थकत्वोपपत्तिरिति भावः। अन्यथेति। घञन्तपाकादिशब्दे शक्त्यभाव इत्यर्थः। कर्मत्वादीनामित्यत्र षष्ठ्याः पाकादावित्यत्र सप्तम्याश्च विषयतैवार्थस्तथा संख्याकर्मत्वनिष्ठविषयतानिरूपितपाकनिष्ठविषयतानिरूपकबोधानुपपत्तिरित्यर्थः। न तु प्रतियोगित्वं षष्ठ्यर्थोऽनुयोगित्वं सप्तम्यर्थः। पाकं पश्येत्यादौ कर्मत्वप्रतियोगिकानुयोगिकशाब्दबोधस्यानुदयात्। धातूनाञ्च सुब्विभक्त्यप्रकृतित्वादिति। पाक इत्यत्र घञन्तस्यैव सुब्विभक्तिप्रकृतित्वादिति भावः। सुप्पदं पाकोऽस्तीत्यत्रत्यतिङोऽप्युपलक्षणम्। तदर्थस्यापि प्रथमाविभक्तिप्रकृत्यर्थे एवान्वयात्। तत्प्रकृतित्वञ्च तन्निष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वम्। प्रकृत्यर्थत्वञ्च न प्रकृतिनिष्ठवृत्तिनिरूपकत्वं कृदन्तपाठकपाठकादिरूपा या सुब्विभक्तिप्रकृतिस्तत्र वृत्तिविरहेण प्रकृत्यर्थाप्रसिद्धेस्तद्घटकप्रत्ययनिष्ठवृत्तिमादाय समन्वये तु धातुनिष्ठवृत्तिनिरूपकधात्वर्थेऽपि प्रकृत्यर्थत्वापत्तेश्च। किन्तु प्रकृतिविशिष्टवृत्तिनिरूपकत्वमेव तत्। वैशिष्ट्यञ्च स्वपर्याप्तत्वस्वचरमावयवपर्याप्तत्वान्यतरसम्बन्धेन। पाचकादिघटकधातुनिष्ठवृत्तौ वैशिष्ट्यविरहान्न दोषः। क्विबन्तस्थले प्रातिपदिकसंज्ञासमये क्विपोऽप्यनुसन्धानेन क्विबन्ते एवोद्देश्यतायास्सत्त्वेन तस्यैव प्रकृतित्वेन धातुनिष्ठवृत्तेस्तत्पर्याप्तत्वाभावेन न धात्वर्थस्य सुप्प्र-

सुब्विभक्त्यप्रकृतित्वात् प्रकृत्येकदेशार्थेऽपि प्रत्ययार्थान्वयोपगमे पचन्तं पश्यतीत्यादितः पचमानं पश्यतीत्यादितश्च पाकादौ द्वितीयाद्यर्थकर्मत्वाद्यन्वयबोधप्रसङ्गात्। एकत्र विशेषणतयोपस्थितस्या-

---

कृत्यर्थत्वम्। न च घञन्तपाकादिशब्द इव कृदन्तपाचकादिशब्देऽपि वृत्तिः किन्नोपेयते, कर्त्तरि कृदितिशास्त्रातिक्रमस्तु भावे घञ् इति शास्त्रातिक्रमेण तुल्य इति वाच्यम्। पचतीत्याद्यर्थे पचादिधातौ शक्तेः क्लृप्ततया पाचक इत्यत्र ण्वुल्मात्रे एव शक्तिकल्पनयोपपत्तौ अनन्तपाचकपाठकादिवृत्त्यानुपूर्व्यवच्छिन्ने शक्तिकल्पनायां गौरवात्, कर्तरि कृदित्यनुशासनविरोधाच्च। घञन्तपाकादिशब्दे च भावे धात्वर्थे एव घञो विधानेन भावस्य च धातुत एव लाभादनन्यलभ्यस्यैव शब्दार्थत्वमिति न्यायविरोधात्, धात्वर्थातिरिक्तशाब्दानुभवविरोधाच्च। शास्त्रस्यापूर्वशक्तिग्रहे तात्पर्याभावात्। घञि शक्त्यभावेऽपि शास्त्रविरोधाभावात्। ननु प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्प्रत्ययानामिति नियमेन प्रकृत्यर्थपदेन प्रकृत्येकदेशार्थोऽपि गृह्यत इति पाक इत्यादौ धात्वर्थेऽप्यन्वयेन नियमानुपपत्तिरित्याह—प्रकृत्येकदेशार्थेऽपीत्यादि। सिद्धान्ते धात्वर्थस्य सुप्प्रकृत्यर्थत्वाभावेन दोषाभावात्। एकत्र विशेषणतयोपस्थितस्येत्यादि। पचन्तं पश्यति पचमानं पश्यतीत्यादौ लडर्थविशेषणतयोपस्थितस्य पाकस्यान्यत्र विभक्त्यर्थकर्मत्वादौ विशेषणतयान्वयो न स्यादिति न प्रकृत्येकदेशार्थान्वये दोष इति भावः। यथा घटो जातिरित्यादौ घटविशेषणतयोपस्थितस्य घटत्वस्य जातावभेदेन नान्वयः।

नन्विदं न युक्तम्। पचतृपचमानेति कृदन्ते शक्तिविरहेण न शत्राद्यर्थकर्तृविशेषणतया प्रकृत्यर्थपाकस्योपस्थितिः। किन्तु विशेष्यतयैव पाकस्योपस्थितिरिति न तस्य कर्म्मत्वादावन्वये व्युत्पत्तिविरोधः। घटो जातिरित्यादौ तु घटत्वविशिष्टे घटे शक्तिसद्भावाद्युक्तमेव घटत्वविशेषणतयोपस्थितिरिति चेत्—न। विशेषणतयेत्यत्र विशेषणता शाब्दबोधीयप्रकारता तृतीयार्थः

न्यत्र विशेषणत्वेनान्वयस्याव्युत्पन्नतया तत्र प्रत्ययार्थविशेषणपाकादेर्न कर्मत्वे विशेषणतयान्वय इति चेत्-तथापि पाकादिविशेषणतया सुवर्थसंख्याया अन्वयसम्भवात्। यत्र पाककर्त्रादेर्द्वित्वादिकं वाधितं पाकादेश्च तदबाधितं तत्र पचन्तौ पश्यति पचमानौ पश्यतीत्यादिप्रयोगप्रसङ्गस्य दुर्वारत्वात्। धातूपस्थाप्यार्थे सुवर्थान्वयबोधं प्रति तत्तद्धातूत्तरप्रत्ययधर्मिकंकिंचिदर्थपरत्वज्ञानस्य प्रतिबन्धकतामुपगम्यैतादृशातिप्रसङ्गवारणे च गौरवात्। एवं शोभनं पचनमित्यादौ धातुमात्रेण पाकाद्युपस्थितौ च तत्र

---

प्रयोजकत्वम्। तस्योपस्थितस्येत्यस्यार्थे उपस्थितिविषयत्वेऽन्वयस्तथा चैकनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकोपस्थितिविषयत्ववतोऽन्यनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वन्नेत्यर्थः। तथा च शत्राद्यर्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकोपस्थितिविषयत्ववतः पाकस्य विभक्त्यर्थकर्मत्वनिष्ठविशेष्यतानिरूपितशाब्दबोधीयप्रकारताश्रयत्वन्न स्यादिति तात्पर्यम्। सकृदुच्चरितस्सकृदेवार्थम्बोधयतीति न्यायादिति भावः। उभयत्रान्वयबोधे आकाङ्क्षाविरहाच्च। धर्मिपारतन्त्र्येण परं घटो नास्तीत्यादावभावे तथाविधस्य घटत्वस्यान्वयः। तत्र तादृशान्वयबोधप्रयोजकाकाङ्क्षायाः कल्पनात्। तथाऽपीति विशेषणतयान्यत्रान्वयस्याव्युत्पन्नतया दोषाभावेऽपीत्यर्थः।

तत्रान्यस्यान्वये बाधकाभावाद्दोषमाह—पाकादिविशेषणतयेत्यादि। धातूपस्थाप्येत्यादि। राजद्वयसम्बन्ध्येकपुरुषतात्पर्य्येण राजपदार्थे द्वित्वान्वये राजपुरुषाविति प्रयोगापत्तिस्तु न तत्पदार्थधार्म्मिकसुवर्थान्वये तत्पदार्थान्वितार्थबोधकतदव्यवहितोत्तरसुप्भिन्नपदधर्म्मिकार्थपरत्वज्ञानम्प्रतिबन्धकमित्यस्य कल्पनात्। घटपटावित्यादिद्वन्द्वस्थले द्वन्द्वघटकसर्व्वपदार्थे संख्यान्वयसिद्धये तत्पदार्थान्वितार्थबोधकत्वम्पदे विशेषणम्। अर्द्धपिप्पल्यावित्यादौ

शोभनाद्यभेदान्वयबोधानुपपत्तिः विशेषणविभक्तिसजातीयविभक्तिप्रकृत्यनुपस्थाप्यत्वात्। प्रकृत्येकदेशसाधारणतादृशविभक्तिप्रकृतित्वस्य प्रयोजकत्वे तत्र ल्युडादेरधिकरणपरत्वेऽपि तथाविधान्वयबोधापत्तेः। कस्यचित्प्रतिबन्धकतां कल्पयित्वा तद्वारणे च गौरवात्। न चैवमुपकुम्भार्द्धपिप्पल्यादिरूपपूर्वपदार्थप्रधानसमासपदात्कुम्भसमीपपिप्पल्यर्द्धादौ विभक्त्यर्थान्वयस्य प्रातिपदिकान्तरार्थाभेदान्वयस्य चानुपपत्तिः। पूर्वपदस्य समासोत्तरविभक्त्यप्रकृतित्वादिति वाच्यम्। तदनुरोधेनैव तत्र कुम्भपिप्पल्यादिपदानामेव कुम्भसमीपपिप्पल्यर्द्धादौ लक्षणायाः पूर्वपदस्य तात्पर्यग्राहमात्रोपयोगितायाश्च स्वीकारात्।

वस्तुतस्तु तत्रोत्तरपदार्थविशेषितपूर्वपदार्थसमीपार्द्धादौ प्रत्ययार्थान्वयबोधे तादृशसमस्तपदप्रत्ययपदयोरव्यवहितपूर्वापरीभावोप्याकाङ्क्षा। एवं तत्र प्रातिपदिकान्तरार्थाऽभेदान्वयबोधे समानविभक्तिकयोस्तादृशसमस्तपदपदान्तरयोश्च समभिव्याहारोप्याकाङ्क्षा। तथा सत्यतिप्रसङ्गविरहात्। धात्वर्थपाकादौ प्रत्ययार्थान्वयबोधे प्रातिपदिकान्तरार्थभेदान्वयबोधे च ल्युड्घञा-

---

पूर्व्वपदार्थप्रधानसमासे पूर्व्वपदार्थे संख्यान्वयानुपपत्तिस्तु न तत्रोत्तरपदस्यैव विशिष्टार्थे लक्षणायाः पूर्व्वपदस्य तात्पर्य्यग्राहकत्वस्य च कल्पनात्। वस्तुतस्त्वित्यादिकल्पे पूर्वपदार्थप्रधानसमासघटकभिन्नत्वस्यापि पदे निवेशनीयत्वाच्च। एवमित्यस्य भावानुशिष्टल्युडन्तसमुदाये शक्त्यकल्पन इत्यर्थः। कस्यचित्प्रतिबन्धकताङ्कल्पयित्वेति। धात्वर्थे शोभनाद्यभेदान्वयबोधे धातूत्तरवर्ति प्रत्ययधर्म्मिकार्थपरत्वज्ञानस्य प्रतिबन्धकत्वमित्यर्थः। न चैवं शोभनम्पचतीत्यादौ पाके शोभनान्वयानापत्तिरिति वाच्यम्। द्वितीयान्तभिन्नपदप्रतिपाद्यशोभनेत्यादिनिवेशात्। न चैवमिति। प्रकृत्येकदेशार्थे विभ-

घञन्तसमुदायप्रत्यययोरव्यवहितपूर्वापरीभावस्य समानविभक्तिकयोस्तादृशसमुदायपदपदान्तरयोः समभिव्याहारस्य चाकाङ्क्षात्वोपगमे दर्शिताधिकरणार्थकल्युट्प्रत्ययस्थलीयातिप्रसङ्गस्य दुरुद्धरतया न तत्सम्भवः। अथ घञन्तसमुदायस्य पाकाद्यर्थकत्वे घञन्तसमुदायस्य संयोगविभागत्वादिविशिष्टावाचकत्वं व्युत्पाद्य संयोगविभागादिपदानां नैमित्तिकसंज्ञात्वनिराकरणं दीधितिकृतां विरुद्धमिति चेत्क्षा क्षतिः। न हि कस्य चिद्ग्रन्थकृतो विपरीतलेखनं युक्तिबलाद्वस्तुसिद्धौ बाधकम्। एवं च यत्र धातुमात्रस्यैव पाकादौ तात्पर्यं तत्र तद्विशेषणवाचकपदाद्द्वितीयैव यत्र तु कृदन्तसमुदायस्य पाकादौ तात्पर्यं तत्र तादृशपदं तथाविधकृदन्तसमुदायसमानविभक्तिकमेव। तदुक्तं कातन्त्रपरिशिष्टकृता- "कथं स्तोकः पाकः कृदन्तविशेषणत्वात्। धात्वर्थैकाधिकरण्ये तु

---

क्त्यर्थानन्वये शोभनाद्यभेदान्वये चेत्यर्थः। नैमित्तिकसंज्ञात्वनिराकरणमिति। जात्यवच्छिन्ननिरूपितशक्तिमती संज्ञा नैमित्तिकसंज्ञेति तद्भावः। विरुद्धमिति। तत्र शक्तेः स्वीकारादिति भावः। एवञ्चेति। घञन्तपाकादिशब्दस्यापि पूर्व्वोक्तयुक्त्या पाकादौ शक्तेस्सिद्धौ इत्यर्थः। यत्र धातुमात्रस्यैव पाकादावित्यादि। न च धातुमात्रस्य पाकादौ तात्पर्य्ये सुवर्थसंख्याकर्मत्वादेरन्वयापत्तिः। पाकस्य प्रकृत्यर्थत्वाभावात्। घञन्तस्य पाकादौ तात्पर्य्ये विभक्त्यर्थान्वयोपपत्तावपि द्वितीयान्तत्वानुपपत्तिरुभयोस्तत्र तात्पर्य्येऽन्वयबोधानुपपत्तिरिति वाच्यम्। । यत्र धातुमात्रस्यैव पाकादौ तात्पर्य्यं तत्र विभक्त्यर्थस्याविवक्षैवात एव द्वितीयान्तपदसमभिव्याहारे प्रथमान्त एव पाकशब्दः। यत्र विभक्त्यर्थस्य विवक्षा तत्र घञन्तस्यैव पाकादौ तात्पर्य्यम्। तत्र घञन्तसमानविभक्तिकमेव स्तोकादिपदमिति व्यवस्था। धात्वर्थैकाधिकरण्ये त्विति। धातुजन्यबोधविषयत्वेन तात्पर्य्यविषयीभूतक्रियाविशेषणानां

स्तोकमोदनस्य पाक इति स्यादेवेति" वदन्ति। तदर्थकपदोत्तर-विभक्त्या संख्याबोधनेऽभेदसंसर्गावच्छिन्नप्रकारताभिन्नतदर्थ-

---

कर्मत्वं घञन्तसमुदायजन्यबोधविषयत्वेन तात्पर्य्यविषयीभूतक्रियाविशेषण-वाचकपदानां घञन्तसमानवचनत्वमिति सिद्धान्तः।

तदर्थकपदोत्तरविभक्त्येति। नीलौ घटावित्यादौ नीलपदोत्तरविभ-क्त्या न द्वित्वं नीले प्रतीयते। नीलेऽभेदसम्बन्धावच्छिन्नप्रकारताभिन्न-विषयताया असत्त्वात्। घटपदोत्तरविभक्त्या तु घटे द्वित्वम्प्रतीयत एव घटेऽभेदसम्बन्धावच्छिन्नप्रकारताभिन्नायाः घटत्वावच्छिन्नविशेष्यतायास्स-त्त्वात्। राज्ञः पुरुषः नीलस्येदमित्यादौ राज्ञि नीले च राजपदोत्तरविभक्त्या नीलपदोत्तरविभक्त्या च संख्या प्रतीयते। तत्रत्यप्रकारताया अभेदसम्बन्धा-वच्छिन्नत्वाभावात्।

ननु नीलो घट इत्यादौ नीलघटयोरभेदात् अभेदसम्बन्धा-वच्छिन्नप्रकारताभिन्नघटत्वावच्छिन्नविशेष्यताया नीलनिष्ठत्वात्। किञ्च नीलत्वनिष्ठप्रकारतानिरूपितायास्तादृश्या अपि नीले सत्त्वात् कथन्न नीले नीलपदोत्तरसंख्या प्रतीयते। किञ्च नीलो घटः नीलस्य रूपमिति वाक्यद्वयजन्यसमूहालम्बनबोधे नीलपदोत्तरसुविभक्त्या नीले संख्याप्रत्य-यस्स्यात्। तत्र भेदसम्बन्धावच्छिन्नप्रकारताया अपि सत्त्वादिति चेत्—अत्रोच्यते। तद्धर्मावच्छिन्नबोधकतत्पदोत्तरविभक्तिप्रयोज्यसंख्यानिष्ठप्रका-रतानिरूपिततद्धर्म्मावच्छिन्नतन्निष्ठविशेष्यताकशाब्दबोधे तद्धर्मावच्छिन्नबो-धकतत्पदप्रयोज्याभेदसम्बन्धावच्छिन्नप्रकारताभिन्नविषयतानिरूपकशाब्द-सामग्रीप्रयोजिकेत्युच्यते। नीलनिष्ठाया अपि घटत्वावच्छिन्नविशेष्यताया नीलत्वावच्छिन्नत्वविरहात्। नीलत्वनिष्ठप्रकारतानिरूपिताया अपि तन्नि-ष्ठविशेष्यताया नीलत्वावच्छिन्नत्वविरहात्। समूहालम्बनस्थले षष्ठ्यन्तप-दप्रयोज्यायास्तस्याः प्रथमान्तनीलपदप्रयोज्यत्वाभावान्नोक्तस्थलद्वये दोषः। वेदाः प्रमाणं, सम्पन्नो व्रीहिरित्यादौ प्रमाणत्वे व्रीहित्वे च विशेषणवाचकप-

विषयताशालिशाब्दबोधसामग्री अपेक्षिता । तादृशश्च बोधस्तदर्थ-विशेष्यकस्तदर्थनिरूपितभेदान्वयविषयकश्च नीलौ घटावित्यादौ च विशेष्यवाचकपदोत्तरविभक्त्यैव द्वित्वादिकं प्रत्याय्यते । एवं च क्रियाविशेषणवाचकपदोत्तरविभक्त्या अबाधितयोरपि द्वित्व-बहुत्वयोः प्रत्यायनासम्भवात्तादृशपदोत्तरमौत्सर्गिकमेकवचनमेव भावाख्यातस्थलवदित्यवधेयम् । अभेदान्वयबोधश्च विरूपोपस्थित-

---

दोत्तरविभक्त्या जायमाने संख्याबोधे निरुक्तकार्य्यतावच्छेदकानाक्रान्ततया निरुक्तकारणविरहेऽपि न क्षतिः । यदि च स्वाश्रयाश्रयत्वसम्बन्धेन प्रमाणत्वावच्छिन्ने व्रीहित्वावच्छिन्ने एव संख्यान्वयस्सिद्धान्तस्तर्हि कार्य्यता-वच्छेदककोटौ प्रकारतायाम्पर्य्याप्तिसम्बन्धावच्छिन्नत्वं तत्र व्यभिचार-वारणाय निवेश्यम् । तादृशश्चेति । अभेदसम्बन्धावच्छिन्नप्रकारताभिन्न-तन्निष्ठविषयतानिरूपकः पूर्वोक्त इति बोध्यम् ।

द्वित्वादिकम्प्रत्याय्यत इति । तद्बोधप्रयोजकनिरुक्तकारणसत्त्वात् । न तु विशेषणवाचकपदोत्तरं विभक्त्या तद्बोधप्रयोजकनिरुक्तकारणाभावात् । एवञ्चेति । निरुक्तकार्य्यकारणभावस्यावश्यकत्वे चेत्यर्थः । प्रत्यायना-सम्भवादिति । निरुक्तकारणविरहादिति भावः । औत्सर्गिकमेकवचनमिति । संख्याबोधासम्भवेन प्रयोगसाधुत्वस्य तेनाप्युपपत्तेरिति भावः । भावाख्या-तस्थलवदिति । तत्र यथा साधुत्वमात्रार्थमेवाख्यातैकवचनप्रयोगस्तद्वत्-क्रियाविशेषणवाचकपदोत्तरमपीत्यर्थः ।

वैयाकरणास्तु 'फलव्यापारयोर्धातुरि'ति भूषणोक्तदिशा धातुमात्रस्य फलविशिष्टव्यापारे शक्तिः । न च सर्वेषां धातूनां तर्हि फलवाचकत्वेन सक-र्मकत्वापत्तिरिति वाच्यम् । फलव्यधिकरणव्यापारवाचकत्वं सकर्म्मकत्वं फलसमानाधिकरणव्यापारवाचकत्वमकर्म्मकत्वमिति स्वीकारेणादोषात् । तादात्म्यफलतावच्छेदकान्यतरसम्बन्धेन फलाश्रयस्य कर्तुरित्यनेन कर्म्मत्व-

योरेवेति व्युत्पत्तिः घटो घटः, दण्डवान् दण्डवान्, पाकं पचतीत्यादौ घटत्वदण्डवत्वपाकत्वाद्यवच्छिन्ने तत्तद्रूपावच्छिन्नस्य तथा विधान्वय-

---

न्तथा च स्तोकं पचतीत्यादौ विक्लित्यादेस्तादात्म्येन फलाश्रयत्वेन कर्म्मत्वात्तन्नाभेदेन विशेषणवाचकस्तोकादिपदाद्द्वितीया तत्फलितमेव क्रियाविशेषणानाङ्कर्म्मत्वम्। तत्र क्रियापदं क्रियते इति व्युत्पत्त्या फलपरम्। न च कर्तुरिति कर्म्मत्वे तद्रूपे कर्म्मणि लकारापत्त्या स्तोकः पच्यत इत्यापत्तिरिति वाच्यम्। कर्तृसाहचर्य्यात्कर्म्मणो भेदेन धात्वर्थान्वितस्यैव लकारादिप्रत्ययविधायकशास्त्रे ग्रहणेनादोषात्। अत एव स्तोकं पाक इत्यादौ षष्ठ्यपि न। न च 'मन्दम्वहति पवन' इत्यादौ व्यापारेऽभेदान्वयिमन्दस्य कर्म्मत्वानापत्त्या अपूर्व्वमेव कर्मत्वबोधकम्वचनं क्रियापदञ्च धात्वर्थमात्रपरमिति वाच्यम्। व्यापारे मन्दतायां तज्जन्यफलस्यापि मन्दत्वसत्त्वात्तत्रापि फले एव मन्दान्वयात्। न च कर्म्मपदस्यान्यतरसम्बन्धघटितोक्तार्थकत्वे कर्मणि द्वितीयेत्यस्य गुर्वर्थबोधकत्वापत्तिः। विभक्तिशक्यतावच्छेदके गौरवापत्तिश्चेति वाच्यम्। कर्म्मत्वशक्तिमत्त्वेनैव कर्म्मपदशक्यत्वादिति वदन्ति।

पूर्वमभेदान्वये प्रातिपदिकार्थे स्वसमानविभक्तिकेनेत्यादिनियममुक्त्वा तत्प्रयोजिकां प्रथमान्तनीलादिपदसमभिव्याहृतप्रथमान्तघटपदत्वादिरूपामाकाङ्क्षाञ्चोक्त्वेदानीमपरस्तत्र नियम उच्यते—अभेदान्वयबोधश्चेत्यादिना। विरूपोपस्थितयोरेवेति। ननु एकव्यक्तेरेवाभेदान्वयात् द्विवचनमनुपपन्नमिति चेत्—न। विरूपाभ्यां विभिन्नरूपाभ्यामुपस्थितो याभ्यां तौ विरूपोपस्थितौ तयोर्विरूपोपस्थितयोरित्यर्थः। इदञ्चाध्याहृतस्य पदयोरित्यस्य विशेषणम्। तत्रत्यषष्ठ्यर्थजन्यत्वस्य बोधेऽन्वयः। तथा च भिन्नरूपेणोपस्थापकपदजन्य एवाभेदान्वयबोध इति नियमाकार इति पदे द्वित्वान्वयेनानुपपत्त्यभावात्। न चैवं नीलो घटः घटो घट इति वाक्यद्वय-

बोधानुदयात्। अथ तत्प्रयोजकसमानविभक्तिकत्वादेः सत्त्वात्कथं न तादृशान्वयबोधः ?

अत्राहुः। यादृशं फलं क्वचित्प्रसिद्ध्यति तादृशस्यैवापत्तिः सम्भवति क्लृप्तसामग्रीबलात्। यादृशं च सर्वथैवाप्रसिद्धं तादृशस्य चापादकाप्रसिद्धेरापत्तिरशक्यैवेति घटत्वाद्यवच्छिन्नविशेष्यताकाभेदसंसर्गकघटत्वाद्यवच्छिन्नप्रकारकशाब्दबोधस्य क्वचिदप्यनुदयात्कथं तदापत्तिः। अथ घटो नीलघटः दण्डवान् रक्तदण्डवा-

---

जन्योऽपि घटत्वावच्छिन्नप्रकारताविशेष्यतानिरूपिताभेदनिष्ठसंसर्गतानिरूपकस्समूहालम्बनात्मको बोधो नियमाक्रान्तत्वेन साधुस्स्यादिति वाच्यम्। भावे क्तः द्विरूपे विभिन्नप्रकारिके ये उपस्थिते उपस्थिती इत्यर्थस्तत्प्रयोज्या या प्रकारताविशेष्यतारूपा विषयता तन्निरूपक एव योऽभेदस्तद्विषयकबोध इत्यर्थः। उपस्थितेः प्रयोज्यत्वसम्बन्धेन षष्ठ्यर्थविषयतायामन्वयस्तस्य निरूपकत्वसम्बन्धेनाभेदेऽन्वयः। उपस्थितिविषयताविशिष्टैवाभेदनिष्ठा शाब्दबोधीया संसर्गता। वैशिष्ट्यञ्च स्वावच्छेदकधर्म्मेतरधर्म्मावच्छिन्नविषयताप्रयोज्यविशेष्यतानिरूपितत्वस्वप्रयोज्यप्रकारतानिरूपितत्वोभयसम्बन्धेन निरुक्तसमूहालम्बनीयाभेदनिष्ठाया निरुक्तसंसर्गताभिन्नत्वेन तद्बोधस्य नियमाक्रान्तत्वेनासाधुत्वात्।

तत्प्रयोजकेति। अभेदान्वयबोधप्रयोजकेत्यर्थो न तु समानधर्म्मावच्छिन्नप्रकारताविशेष्यताकाभेदान्वयप्रयोजकेत्यर्थः। तादृशबोधस्याप्रसिद्धत्वेन तत्प्रयोजकस्याप्यप्रसिद्धेः। यादृशं फलमिति। यद्धर्म्मावच्छिन्नं फलमित्यर्थः। तादृशस्यैवेति। तद्धर्म्मावच्छिन्नस्यैवेत्यर्थः। क्वचिदप्यनुदयादिति। तथा च तद्धर्म्मावच्छिन्नकार्य्यतानिरूपिताकारणताश्रयस्याप्रसिद्ध्या नापत्तिसम्भवः। कतिपयकारणाधिकरणे कार्य्याभावप्रयोजकजिज्ञासाया एवापत्तिपदार्थत्वात्। घटो नीलघट इत्यादि। अत्र नीलत्वा-

-नित्यादौ तादृशशाब्दबोधस्य प्रसिद्धिः । विधेयकोटावधिकाव-
गाहिनः शाब्दबोधस्य नवीनैः स्वीकारादिति चेत्तर्हि घटाद्यंशे
विशेषणतावच्छेदकविधया नीलादिभाननियामकनीलाद्युपस्थि-

---

-देरधिकस्य भानेऽपि घटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशे-
-ष्यतानिरूपकशाब्दबुद्धित्वस्य सत्त्वात्तदवच्छिन्नकार्य्यकारणस्य घटत्वा-
वच्छिन्नोपस्थितेः प्रथमान्तघटपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्-
-क्षायास्तात्पर्य्यस्य च घटो घट इत्यत्रापि सत्त्वादिति भावः ।

विधेयकोटावधिकावगाहिन इति । विधेयघटकतयाऽखिलोद्देश्यं तदित-
-रञ्चावगाहिन इत्यर्थः । उद्देश्यस्य प्रथमावगतत्वेन तस्यापूर्वबोध्यत्वरूप-
विधेयत्वासम्भवेन विधेयतयोद्देश्यावगाही शाब्दबोधो न सम्भवतीति प्राचा-
-मभिमतम् ।

घटत्वेनावगतेऽपि घटो नीलघटो न वेति सन्देहस्य सर्वानुभवसिद्धतया
नीलघटार्थिनस्तत्र प्रवृत्तिर्न स्यादिति तादृशप्रवृत्तिसिद्ध्यर्थं प्रकृतसन्देहोच्छे-
-दाय घटो नीलघट इति बोधोऽवश्यमभ्युपेयः । तथा च अगत्या कस्यचिदं-
-शस्यापूर्वत्वे तद्विशिष्टः पूर्वमवगतोऽप्यपूर्व एवेति वक्तव्य एवेत्युद्देश्यस्या-
-पूर्वधर्म्मविशिष्टस्य विधेयतयाऽवगाही बोधे स्वीकरणीय एवेति नवीनाभि-
-प्रायः । तथा च नीलघटो घट इत्यादौ घटत्वावच्छिन्नप्रकारतानिरूपित-
घटत्वावच्छिन्नविशेष्यताकः शाब्दबोधः प्रसिद्धः । तस्य घटत्वाद्युपस्थित्या-
दिकारणमपि प्रसिद्धन्तस्य घटो घट इत्यादावपि सत्त्वेन तादृशो बोधः
-स्यादिति भावः । विशेषणतावच्छेदकविधयेत्यादि । अयम्भावः । तस्य
बोधस्य यथा घटत्वोपस्थित्यादिः कारणं तथा नीलाद्युपस्थितिरपि कारणम् ।
कारणकूटस्यैव च कार्य्योत्पादकत्वेन घटोपस्थितेस्सत्त्वेऽपि नीलोपस्थित्या-
-देरसत्त्वान्नापत्तिरिति दिक् ।

नन्विदं न युक्तम् । प्रसिद्धव्यक्तेस्तु नापत्तिस्सम्भवति । तस्या अन्यत्रो-
-त्पत्त्यसम्भवात् । अपि तु प्रसिद्धो यो धर्म्मस्तदवच्छिन्नकार्य्यतानिरूपित-

तितात्पर्यज्ञानविशेषादिघटितैव सामग्री घटत्वावच्छिन्नविशेष्यकनीलघटत्वाद्यवच्छिन्नाभेदान्वयबोधप्रयोजिका तदभावादेव घटो घट इत्यादिषु न तादृशशाब्दबोधापत्तिरिति केचित् –तन्न। द्रव्यत्वादौ धर्मितावच्छेदकतासंसर्गेण प्रसिद्धस्य शुद्धघटत्वाद्यवच्छिन्नप्रकारकाभेदान्वयबोधस्य घटत्वादावापत्तिसंभवात्। न च तत्रापादकाभावः, तात्पर्यज्ञानविशेषादिघटिताया धर्मिताव-

---

कारणताश्रयबलात् तद्धर्मावच्छिन्नकार्यस्यापत्तिर्भवति। तथा च घटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नं प्रति कारणता नीलोपस्थित्यादेर्व्यभिचारेण न सम्भवति। अपि तु प्रथमान्तघटपदसमभिव्याहृतप्रथमान्तघटपदत्वादिरूपाकाङ्क्षाज्ञानादेरेव तद्बलात्। घटो घट इत्यादौ तादृशधर्मावच्छिन्नकार्योत्पादनेऽकारणीभूताया नीलाद्युपस्थितेर्विरहस्याकिञ्चित्करत्वादिति चेत्—अत्रोच्यते। सामान्यस्य निर्विशेषस्याभावेन सामान्यधर्मावच्छिन्ने कार्ये जननीये विशेषधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपेक्षितत्वमित्यस्य वक्तव्यतया घटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यतानिरूपकशाब्दबुद्धित्वरूपसामान्यधर्मावच्छिन्नकार्योत्पत्तौ नीलघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वरूपविशेषधर्मावच्छिन्नकार्योत्पादिकाया नीलाद्युपस्थितिघटितसामग्र्या अपेक्षितत्वेन नीलाद्युपस्थितेरवश्यापेक्षणीयत्वान्नानुपपत्तिः। किञ्च शुद्धघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्याभाव एवापि तु नीलघटत्वाद्यवच्छिन्नप्रकारताकनिरूपितघटत्वावच्छिन्नविशेष्यताक एवेति न शुद्धघटत्वावच्छिन्नप्रकारताकनिरुक्तशाब्दबुद्धित्वावच्छिन्नं प्रति कस्यापि कारणता किन्तु नीलघटत्वाद्यवच्छिन्नप्रकारताकनिरुक्तधर्मावच्छिन्नं प्रत्येव। तथा च घटत्वावच्छिन्नप्रकारताघटितोक्तधर्मावच्छिन्नसत्त्वं नीलघटत्वावच्छिन्न-

च्छेदकतया द्रव्यत्वादौ तदुत्पादनियामकसामग्र्या एवापादकत्वात्। न च धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपदजन्यद्रव्यत्वाद्यवच्छिन्नविशेष्यकोपस्थितितदवच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्र्येव । धर्मितावच्छेदकतायास्तत्कार्यतावच्छेदकताविरहेऽपि द्रव्यत्वादिनिष्ठायास्तत्कार्यतावच्छेदकधर्मघटकत्वात्. तादृशसामग्र्याश्चात्मनिष्ठप्रत्यासत्त्या द्रव्यत्वाद्यवच्छिन्नविशेष्यकघटत्वाद्यवच्छिन्नाद्यभेदबुद्धित्वरूपस्वीयकार्यतावच्छेदकावच्छिन्नोत्पत्तेरेव व्याप्यत-

---

प्रकारताकनिरुक्तकार्य्यं प्रति या नीलाद्युपस्थितिघटिता सामग्री तत्प्रयोज्यमेव वक्तव्यम् । तर्हि नीलाद्युपस्थित्यभावे तत्सत्त्वस्य न प्रसङ्गः ।

द्रव्यत्वादावित्यादि । अयं भावः । द्रव्यं घट इत्यादौ यो द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताकः शाब्दबोधः सोऽभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकः धर्म्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे प्रसिद्धश्च । तादृशस्याभेदसम्बन्धावच्छिन्नप्रकारताकशाब्दबोधस्य धर्म्मितावच्छेदकतासम्बन्धेन घटो घट इत्यादौ घटत्वे आपत्तिस्सम्भवति । आपादकोऽपि द्रव्यं घट इत्यादौ द्रव्यत्वे धर्म्मितावच्छेदकतासम्बन्धेन शाब्दबोधोत्पादकं यदभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकं योग्यताज्ञानं घटत्वावच्छिन्नप्रकारताकबोधजननेच्छया उच्चरितत्वरूपतात्पर्य्यज्ञानं घटत्वावच्छिन्नोपस्थितिरित्येतत्समुदायो यो धर्म्मितावच्छेदकतासम्बन्धेन द्रव्यत्वेऽभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकशाब्दबोधोत्पादकः स एवेति ।

अत्र शङ्कते । द्रव्यत्वे निरुक्तसम्बन्धेन निरुक्तशाब्दबोधोत्पादिका द्रव्यत्वावच्छिन्नविशेष्यताकाभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकयोग्यताज्ञानं द्रव्यपदजन्यद्रव्यत्वावच्छिन्नविशेष्यताकोपस्थित्यादिघटितैव सामग्री अन्यथा अन्यधर्म्मावच्छिन्नविशेष्यताकयोग्यताज्ञानादिनाऽन्यधर्म्मा-

वच्छिन्नविशेष्यकशाब्दबोधापत्तेः । तथा च तदभावान्न घटो घट इत्यादौ घटत्वे तादृशो बोध इत्याशयः । ननु द्रव्यत्वावच्छिन्नविशेष्यकनिरुक्त-योग्यताज्ञानादिघटिता सामग्री आत्मनिष्ठप्रत्यासत्त्या कारणीभूता तस्याः कार्य्यतावच्छेदकस्समवाय एव न तु धर्म्मितावच्छेदकस्तर्हि तेन सम्बन्धेन तस्याः कथं द्रव्यत्वे कार्योत्पादकत्वमिति चेत्—अत्रोच्यते । आत्मनिष्ठ-प्रत्यासत्त्या कारणीभूताया द्रव्यत्वावच्छिन्नविशेष्यताकोपस्थितितदवच्छिन्न-विशेष्यकघटत्वावच्छिन्नप्रकारताकयोग्यताज्ञानादिघटितायास्सामग्र्याः का-र्य्यतावच्छेदकं घटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताक-शाब्दबुद्धित्वम् । तद्घटकत्वञ्च द्रव्यत्ववृत्तिधर्म्मितावच्छेदकतायास्तथा च धर्म्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे जायमानाभेदसम्बन्धावच्छिन्नघटत्वा-वच्छिन्नप्रकारताकशाब्दबुद्धित्वं निरुक्तकार्य्यतावच्छेदकसमनियतं समनियत-धर्म्मावच्छिन्ने कार्य्ये जननीये समनियतधर्म्मावच्छिन्नकार्य्योत्पादकसामग्र्या अपेक्षा । अत एव कालादौ कालिकादिसम्बन्धेन जायमानशाब्दबोधं प्रति कालिकादिसम्बन्धेन काले जायमानशाब्दबुद्धित्वस्य समनियतं समवाये-नात्मनि जायमानशाब्दबुद्धित्वं तद्धर्म्मावच्छिन्नस्य करणीभूता या आत्म-निष्ठोपस्थित्यादिघटिता सामग्री सैवापेक्ष्यते न तु काले सामग्र्यन्तरापेक्षा । अतो धर्म्मितावच्छेदकताया कार्य्यतावच्छेदकसम्बन्धताविरहेऽपि तेन सम्ब-न्धेन कार्य्योत्पत्तावुपस्थित्यादिघटिताया अपेक्षेति युक्तमेव ।

ननु यथा आत्मनि विद्यमाना द्रव्यत्वावच्छिन्नोपस्थित्यादिघटिता सामग्री स्वीयकार्य्यतानवच्छेदकेनापि धर्म्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे शाब्दबोधं जनयति तथैव घटत्वेऽपि तेन सम्बन्धेनाभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्नप्रकारताकशाब्दबोधं कथन्नोत्पादयतीति चेत्—न । द्रव्यत्वे विद्यमानधर्म्मितावच्छेदकताया एव तदीयकार्य्यतावच्छेदकधर्म्मघटकत्वं न तु घटत्वे विद्यमानायास्तस्या इति घटत्वे तेन सम्बन्धेन जायमानघटप्रकारका-भेदबुद्धित्वस्य तदीयकार्य्यतावच्छेदकद्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबुद्धि-त्वसमनियतत्वाभावात् ।

या घटत्वादौ धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नाभेद-बोधापादकत्वं न सम्भवतीति वाच्यम्। योग्यताज्ञानस्य धर्मि-तावच्छेदकं निवेश्य तदुद्देशेनानन्तकारणताकल्पनमपेक्ष्य लाघ-वाद्धर्मिता[१]वच्छेदकतासम्बन्धेन शाब्दबुद्धौ तादृशसम्बन्धेन ध-र्मितावच्छेदकमनिवेश्य हेतुताकल्पनस्यैव युक्तत्वात्। घटत्वादिध-

---

ननु घटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वमेव द्रव्यत्वावच्छिन्नो-पस्थित्यादिघटितसामग्र्याः कार्य्यतावच्छेदकं कुतो न तथा सति घटत्व-निष्ठाया अपि धर्म्मितावच्छेदकतायाः स्वीयकार्य्यतावच्छेदकधर्म्मघटकत्वं भविष्यतीति चेत्—न। यद्धर्म्मावच्छिन्नं प्रति यस्याः सामग्र्या व्याप्यत्वं स एव धर्म्मस्तत्सामग्र्याः कार्य्यतावच्छेदकमिति नियमात् द्रव्यत्वावच्छिन्नवि-शेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रत्येव द्रव्यत्वावच्छिन्नोपस्थित्यादिघटितायाः सामग्र्या व्याप्यत्वन्न तु घटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रतीतितादृशशाब्दबुद्धित्वस्य तादृशसामग्र्यो कार्य्यतावच्छेदकत्वासम्भवात्। तथा च घटत्वे आपादकाभावान्नापत्तिरिति स्थितम्। इदानीं गौरवेणात्म-निष्ठप्रत्यासत्त्या कार्य्यकारणभावं विहाय लाघवाद्धर्म्मितावच्छेदकमनिवेश्य विषयनिष्ठप्रत्यासत्त्या कार्य्यकारणभावमङ्गीकृत्यापत्तिं स्थापयति—योग्यताज्ञानस्य धर्म्मितावच्छेदकं निवेश्येत्यादिना। समवायसम्बन्धेन घटत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्य-ताकशाब्दबुद्धित्वावच्छिन्नं प्रति समवायसम्बन्धेन घटत्वावच्छिन्नाभेदसम्ब-न्धावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताकयोग्यताज्ञानं कार-णमित्यात्मनिष्ठप्रत्यासत्त्या कार्य्यकारणभावे धर्म्मितावच्छेदकभेदेन केवल-

---

[१]तत्सम्बन्धावच्छिन्नतद्धर्म्मावच्छिन्नप्रकारतानिरूपितेति शेषः। तेन घटे द्रव्यमिति योग्यताज्ञानात् पटप्रकारकशाब्दबोधस्य नापत्तिरिति दिक्।

र्मितावच्छेदकघटत्वाद्यवच्छिन्नप्रकारताकयोग्यताज्ञानबलादेव घटत्वादौ धर्मितावच्छेदकतासम्बन्धेन तदापत्तेः ।

न च योग्यताज्ञानस्य धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या हेतुत्वोपगमे द्रव्यत्वाद्यवच्छिन्नस्य पदादनुपस्थितत्वेऽपि द्रव्यत्वादौ तादृशप्रत्यासत्त्या प्रत्यासन्नयोग्यताज्ञानात्तत्र तादृशप्रत्यासत्त्या शाब्दबोधापत्तिः । आत्मनिष्ठप्रत्यासत्त्या हेतुभूतां द्रव्यत्वाद्यवच्छिन्नोपस्थितिमन्तरेणापि तादृशप्रमेयत्वाद्यवच्छिन्नोपस्थित्यादिदशा-

---

घटत्वावच्छिन्नप्रकारताकशाब्दबोधे कार्य्यकारणभावानन्त्यमिति गौरवम् । धर्म्मितावच्छेदकतासम्बन्धेन अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकशाब्दबुद्धित्वावच्छिन्नं प्रति धर्म्मितावच्छेदकतासम्बन्धेनाभेदसम्बधावच्छिन्नघटत्वावच्छिन्नप्रकारताकयोग्यताज्ञानं कारणमिति धर्म्मितावच्छेदकनिष्ठप्रत्यासत्त्या कार्य्यकारणभावे अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकशाब्दबोधमात्रस्य निरुक्तकार्य्यतावच्छेदकाक्रान्ततया अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकयोग्यताज्ञानमात्रस्य निरुक्तकारणतावच्छेदकाक्रान्ततया च निरुक्ते नैकविधकार्य्यकारणभावेनैव निर्वाह इति लाघवम् । ततश्च घटत्वे धर्म्मितावच्छेदकतासम्बन्धेनाभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकयोग्यताज्ञानबलाद्द्रव्यत्व इवाभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकशाब्दबोधापत्तिः । अथ प्रमेयपदजन्यप्रमेयत्वावच्छिन्नोपस्थितिदशायां द्रव्यत्वावच्छिन्नोपस्थितिमन्तरेणापि धर्म्मितावच्छेदकतासम्बन्धप्रमेयत्वे घटत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारताकयोग्यताज्ञानबलात् धर्म्मितावच्छेदकतासम्बन्धेन अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकशाब्दबोधो घटः प्रमेय इत्यादौ यथा भवति तथा द्रव्यपदाद् द्रव्यत्वावच्छिन्नोपस्थित्यभावे उक्तसम्बन्धेनोक्तयोग्यताज्ञानबलात् घटो द्रव्यमिति शाब्दबोधापत्तिरित्याह—न च योग्यताज्ञानस्येत्यादिना ।। तथा च

यां प्रमेयत्वादौ धर्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानस्य फलजनकत्वात्तादृशद्रव्यत्वाद्यवच्छिन्नोपस्थितिविरहस्याकिञ्चित्करत्वादिति वाच्यम् । समानप्रकारता[१] प्रत्यासत्त्या पदार्थोपस्थितेः शाब्दबोधे हेतुत्वोपगमात् । येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यं प्रति येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकता तेन स-

विषयनिष्टप्रत्यासत्त्या कार्य्यकारणभावो न वक्तव्य इति भावः । विषयनिष्ठप्रत्यासत्त्या कार्य्यकारणभाववादी समाधत्ते—समानप्रकारतेत्यादिना । प्रकारतासम्बन्धेन शाब्दबोधं प्रति प्रकारतासम्बन्धेनोपस्थितिः कारणमिति कार्य्यकारणभावः । न च धर्म्मितावच्छेदकतायाः प्रकारतायाःप्रकारतानात्मकतया तेन सम्बन्धेन शाब्दबोधे तावतापि किमायातमित्याह—येन सम्बन्धेन यद्धर्म्मावच्छिन्नकार्य्यं प्रतीत्यादि । तथा च धर्म्मितावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति प्रकारतासम्बन्धेन शाब्दबोधस्य व्यापकत्वात् । तत्सामग्र्याः प्रकारतासम्बन्धेनोपस्थितिघटिताया धर्म्मितावच्छेदकतासम्बन्धेन शाब्दबोधेऽपेक्षणात्तदभावेन नानुपस्थितिदशायां धर्म्मितावच्छेदकतासम्बन्धेन शाब्दबोधः । न च सुन्दरो घटो नील इत्यादौ सुन्दररूपपदार्थे प्रकारतासम्बन्धेनोपस्थित्यभावात् कथं धर्म्मितावच्छेदकतासम्बन्धेन शाब्दबोध इति वाच्यम् । निरवच्छिन्नधर्म्मितावच्छेदकतासम्बन्धेन शाब्दबोधे एव तत्सामग्र्या अपेक्षणात् । प्रकृते च सुन्दरत्वावच्छिन्नायास्तस्यास्सत्वात् ।

अत्रेदं विचार्य्यते । धर्म्मितावच्छेदकतासम्बन्धेनाभेदसम्बन्धावच्छिन्न-

[१]प्रकारतावच्छेदकस्यैक्यात्प्रकारतयोरप्यैक्यमित्याह—समानप्रकारतेति । सावच्छिन्नविषयतानामवच्छेदकभेदादेव भेदः निरवच्छिन्नविषयतानान्तु आश्रयभेदाद्भेदः । ज्ञानभेदात्तु नैव विषयता भिद्यते । येनोपस्थितीयशाब्दबोधीये भिद्येतामिति विमर्शः ।

म्बन्धेन तद्धर्मावच्छिन्नकार्योत्पादकसामग्र्या अपि तेन सम्ब-न्धेन तद्धर्मावच्छिन्नकार्योत्पत्तावपेक्षिततया प्रकारतासम्बन्धेन द्रव्यत्वादौ द्रव्यपदजन्यपदार्थोपस्थित्यसत्त्वे तत्र तद्धर्मितावच्छे-

---

घटत्वावच्छिन्नप्रकारताकशाब्दबुद्धित्वावच्छिन्नं धर्म्मितावच्छेदकतासम्बन्धे-नाभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकयोग्यताज्ञानं कारणमिति विषयनिष्ठप्रत्यासत्त्या कार्य्यकारणभावे अन्यसमवेतयोग्यताज्ञानादन्य-समवेतशाब्दबोधापत्तिवारणाय तत्पुरुषीयनिरुक्तशाब्दबोधे तत्पुरुषीय-निरुक्तयोग्यताज्ञानं कारणमित्यस्य वक्तव्यतया पुरुषभेदेन कार्य्यकारण-भावानन्त्यं विषयनिष्ठप्रत्यासत्त्या कार्य्यकारणभावेऽपि तुल्यमित्यात्मनिष्ठ-प्रत्यासत्त्या कार्य्यकारणभावापेक्षायां मानमिति चेत्—न। सुन्दरो घटः सुन्दरः पुरुष इत्यादिशाब्दबोधं प्रति घटत्वाद्यचेतनधर्म्माणामनन्तानां पुरुषत्वादिचेतनधर्म्माणामनन्तानां निवेशेन कारणत्वे यावान् कार्य्यकारण-भावस्ततोऽर्द्ध एव पुरुषभेदभिन्नः कार्य्यकारणभावो विषयनिष्ठप्रत्यासत्त्येति लाघवात्। न च द्रव्यत्वे धर्म्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानस्य प्रकारतासम्बन्धेन द्रव्यपदजन्योपस्थितेश्च सत्त्वात् घटस्य द्रव्यमित्यादा-वपि द्रव्यत्वे धर्म्मितावच्छेदकतासम्बन्धेन घटाभेदान्वयापत्तिः। न च प्रथमा-न्तघटपदसमभिव्याहृतप्रथमान्तद्रव्यपदत्वादिरूपाकाङ्क्षाज्ञानविरहान्नापत्ति-रिति वाच्यम्। घटः प्रमेय इत्यादौ तादृशाकाङ्क्षाज्ञानाभावेऽपि धर्म्मिता-वच्छेदकताप्रकारतासम्बन्धाभ्यां प्रमेयत्वे योग्यताज्ञानोपस्थितिभ्यां धर्म्मिता-वच्छेदकतासम्बन्धेन घटाभेदान्वयोत्पत्त्या तादृशाकाङ्क्षाज्ञानविरहस्य धर्म्मि-तावच्छेदकतासम्बन्धेन शाब्दबोधोत्पत्तावकिञ्चित्करत्वादिति वाच्यम्। आकाङ्क्षाज्ञानीयमात्मनिष्ठप्रत्यासत्त्या कार्य्यतावच्छेदकं यत् द्रव्यत्वा-वच्छिन्नविशेष्यताकशाब्दबुद्धित्वं तद्घटकत्वस्य द्रव्यत्वनिष्ठाया धर्म्मिता-वच्छेदकतायास्सत्त्वेन द्रव्यत्ववृत्तिधर्म्मितावच्छेदकतासम्बन्धेन जायमान-

दकतासम्बन्धेन शाब्दबोधापत्तेरयोगात्। न च यत्र प्रमेयत्वाद्यवच्छिन्नविशेष्यकवृत्तिज्ञानजन्यप्रमेयत्वाद्यवच्छिन्नविशेष्यकोपस्थितावेव उद्बोधकान्तरात् द्रव्यत्वाद्यवच्छिन्नस्य भानं तत्र द्रव्यत्वाद्यवच्छिन्नविषयकशाब्दापत्तिवारणाय तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मप्रकारकोपस्थितित्वेनैव पदार्थोपस्थितेर्हेतुता वाच्या। तथा च प्रकारविशेषनिवेशस्यावश्यकत्वे विषयनिष्ठप्रत्यासत्त्या हेतुताकल्पन-

---

शाब्दबुद्धित्वं द्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वसमनियतन्ततश्च समनियतधर्म्मावच्छिन्ने कार्य्ये जननीये समनियतधर्म्मावच्छिन्नकार्य्योत्पादकसामग्र्याः पूर्वोक्तरीत्या अपेक्षिततया द्रव्यत्वे धर्म्मितावच्छेदकतासम्बन्धेन शाब्दबोधं द्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबोधकारणीभूतनिरुक्ताकाङ्क्षाज्ञानस्यापेक्षिततया तदभावेनापत्त्यभावात्। न चैवं रीत्या आपत्तिवारणे अनुपस्थितिदशायामप्यनयैव रीत्या वारणसम्भवात्। समानप्रकारताप्रत्यासत्त्योपस्थितेः कारणत्वाश्रयणं ग्रन्थकृतामसङ्गतमिति वाच्यम्। आत्मनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेः कारणत्वापेक्षया विषयनिष्ठप्रत्यासत्त्या कारणत्वे लाघवात्। लघुभूतोपायेनापत्तिवारणसम्भवे गुरुभूतमार्गानुसरणस्यायुक्तत्वात्। विषयनिष्ठप्रत्यासत्त्या आकाङ्क्षाज्ञानस्य कारणत्वन्न सम्भवति। इत्यात्मनिष्ठप्रत्यासत्त्या कार्य्यकारणभावः। उपस्थितेश्च सम्भवतीति तथैवाश्रितः। प्रकारतासम्बन्धेनोपस्थितेः कारणत्वे दोषमाह—न च यत्र प्रमेयत्वाद्यवच्छिन्नविशेष्यकवृत्तिज्ञानेत्यादिना। उद्बोधकान्तरात् द्रव्ये चक्षुःसन्निकर्षादेरित्यर्थः। हेतुताकल्पनमयुक्तमिति। अनन्तप्रकारीभूतद्रव्यत्वादीनां कार्य्यतावच्छेदके कारणतावच्छेदके च प्रवेशेन यद्यप्यात्मनिष्ठप्रत्यासत्त्या कार्य्यकारणभावे साम्यमेव तथाऽपि तत्पुरुषीयत्वनिवेशेन गौरवादित्यर्थः।

मयुक्तम् । तथा सति पुरुषभेदेन कार्यकारणभावबाहुल्यप्रसङ्ग इति वाच्यम् । स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासम्बन्धेनोपस्थितेर्हेतुतां स्वीकृत्य तादृशा-

---

दोषवारणोपायमाह—स्वजनकज्ञानीयेत्यादिना । स्वमुपस्थितिस्तज्जनकं ज्ञानं प्रमेयः । प्रमेयपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यतावानित्याकारकन्तदीया वृत्तिनिष्ठा प्रकारता विशेष्यतानिष्ठा तन्निरूपिता विशेष्यता प्रमेये तदवच्छेदकता प्रमेयत्वे सामानाधिकरण्येन तद्वैशिष्ट्यं प्रमेयत्वनिष्ठायामेवोपस्थितीयप्रकारतायां न तूद्बोधकान्तराद्धासमानद्रव्यत्वनिष्ठायान्तस्यामिति न तदानीं द्रव्यत्वे शाब्दबोधः प्रकारतासम्बन्धेन, तत्र निरुक्तप्रकारतासम्बन्धेनोपस्थितेरभावादिति भावः । न च प्रमेयत्वादिप्रकारकोपस्थितिजनकानि वृत्तिज्ञानानि प्रमेयः प्रमेयपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यतावान् । स्वजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यतासम्बन्धेन प्रमेयः प्रमेयपदवान् । प्रमेयपदं प्रमेयत्वावच्छिन्नविषयताकबोधजनकत्वनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यतावत् । स्वविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यतासम्बन्धेन प्रमेयपदं प्रमेयविशिष्टमित्याकारकम् । एवं वृत्तित्वस्यानुगतानतिप्रसक्तस्य दुर्वचतया शक्तित्वेन लक्षणात्वेन शक्तिलक्षणयोः पृथक् प्रवेश आवश्यकस्तथा च प्रमेयः पटपदशक्यसम्बन्धीत्याकारकं स्वशक्यसम्बन्धित्वसम्बन्धेन प्रमेयः पटपदवान् इत्याकारकं प्रमेयसम्बन्धि शक्तं घटपदं स्वसम्बन्धिशक्तत्वसम्बन्धेन पटपदं प्रमेयविशिष्टमित्याकारकञ्च । तेषु आद्यज्ञानजन्योपस्थितीयप्रकारता या प्रमेयत्वनिष्ठा तत्र तदुपस्थितिजनकज्ञानीयनिरुक्तविशेष्यतारूपवृत्तिनिष्ठप्रकारतानिरूपितप्रमेयनिष्ठाविशेष्यतावच्छेदकता वैशिष्ट्यसत्त्वेऽपि ज्ञानान्तरजन्योपस्थितीयप्रमेयत्वनिष्ठप्रकारतायां निरुक्तावच्छेदकतासामानाधिकरण्यविरहात् तत्तज्ज्ञानजन्योपस्थितिदशायां

शाब्दबोधानापत्तिः। तथा च प्रकारतासम्बन्धेन शाब्दबोधं प्रति स्वजनकज्ञानीयशक्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकता स्वजनकज्ञानीयशक्तिसम्बन्धावच्छिन्नपदनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकता स्वजनकज्ञानीयपदनिष्ठविशेष्यतानिरूपितजनकत्वनिष्ठेच्छीयप्रकारतानिरूपितबोधनिष्ठावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकत्वनिरूपितावच्छेदकतावच्छेदकता स्वजनकज्ञानीयशक्तिसम्बन्धावच्छिन्नपदनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकता स्वजनकज्ञानीयलक्षणानिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकता स्वजनकज्ञानीयलक्षणासम्बन्धावच्छिन्नपदप्रकारतानिरूपितविशेष्यतावच्छेदकता स्वजनकज्ञानीयलक्षणासम्बन्धावच्छिन्ना पदनिष्ठविशेष्यतानिरूपिता या प्रकारता तदवच्छेदकता स्वजनकज्ञानीयपदनिष्ठविशेष्यतानिरूपितशक्तत्वनिष्ठप्रकारतानिरूपितसम्बन्धिनिष्ठावच्छेदकतानिरूपितावच्छेदकतावच्छेदकतानां सामानाधिकरण्यं प्रकारतायां पृथक् पृथक् निवेश्योपस्थितीनां कारणत्वं पृथगेव वक्तव्यम्। तथा च परस्परजन्यबोधे व्यभिचारवारणाय कार्य्यतावच्छेदककोटौ तत्तदुपस्थित्यानन्तर्य्यं निवेशनीयम्। तथा च कस्यापि कार्य्यतावच्छेदकस्य धर्म्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारताकशाब्दबुद्धित्वं प्रति व्यापकताया अभावेन धर्म्मितावच्छेदकतासम्बन्धेन तद्धर्मावच्छिन्नकार्य्यं तत्तद्धर्म्मावच्छिन्नकार्योत्पादकसामग्र्या अनपेक्षणादनुपस्थितिदशायां द्रव्यत्वे निरुक्तसम्बन्धेन निरुक्तशाब्दबोधापत्तितादवस्थ्यमेवेति चेत्—अत्रोच्यते। प्रकारतासम्बन्धेन शाब्दबुद्धित्वं प्रति तत्तदानन्तर्य्यघटिततत्तद्धर्म्मस्य व्याप्यतया व्यापकधर्म्मावच्छिन्ने कार्य्ये जननीये व्याप्यधर्म्मावच्छिन्नकार्य्योत्पादकसामग्र्या अपेक्षणात्। प्रकारतासम्बन्धेन शाब्दबोधे तादृशोपस्थितीनामपेक्षा धर्म्मितावच्छेदकतासम्बन्धेन शाब्दबोधे च व्यापकसामग्रीविधया तादृशोपस्थितीनामपेक्षेति नानुपस्थितिदशायां धर्म्मितावच्छेदकतासम्बन्धेन शाब्दबोधोपपत्तिरिति दिक्।

न च विशेष्यतावच्छेदकतामात्रस्योपस्थितिनिष्ठकारणतावच्छेदकसं-

सर्गतोपगमेऽप्युद्बोधकान्तरादुपस्थितद्रव्यत्वे शाब्दापत्तिवारणसम्भवे प्रकारतापर्य्यन्तानुधावनं व्यर्थमिति वाच्यम् । द्रव्यं द्रव्यपदशक्यं प्रमेयः प्रमेयपदशक्य इति समूहालम्बनवृत्तिज्ञानात्प्रमेयत्वावच्छिन्नमात्रोपस्थितौ द्रव्यत्वेऽपि विशेष्यतावच्छेदकतासम्बन्धेनोपस्थितेस्सत्त्वाच्छाब्दापत्तेर्वारणाय प्रकारतापर्य्यन्तस्यादरादुद्बोधकान्तरादुपस्थितद्रव्यत्वनिष्ठप्रकारतायां कालिकसम्बन्धेन प्रमेयत्वनिष्ठनिरुक्तविशेष्यतावच्छेदकतावैशिष्ट्यमादायोक्तदोषतादवस्थ्यमिति सामानाधिकरण्यसम्बन्धेन वैशिष्ट्यं बोध्यम् । घटो घटपदशक्य इति वृत्तिज्ञानाद्घटत्वावच्छिन्नोपस्थितावुद्बोधकान्तरात्प्रमेयत्वावच्छिन्नस्य भाने प्रमेयत्वावच्छिन्नप्रकारतायां निरुक्तविशेष्यतावच्छेदकतावैशिष्ट्यसत्त्वात् प्रमेयत्वावच्छिन्नप्रकारताकशाब्दबोधवारणाय स्वानवच्छेदकधर्म्मानवच्छिन्नत्वस्यापि वैशिष्ट्यघटकत्व बोध्यम् । प्रकृते चावच्छेदकतानवच्छेदकप्रमेयत्वावच्छिन्नत्वस्यैव प्रमेयत्वावच्छिन्नप्रकारतायां सत्त्वेनादोषः । प्रमेयवान् प्रमेयपदशक्य इति वृत्तिज्ञानात्प्रमेयत्वावच्छिन्नप्रकारताकोपस्थितावुद्बोधकान्तराद्घटत्वावच्छिन्नस्य भाने निरवच्छिन्नघटत्वनिष्ठप्रकारतायां वृत्तिज्ञानीयधर्म्मितानिरूपितप्रमेयत्वावच्छिन्नावच्छेदकतावैशिष्ट्यसत्त्वान्निरवच्छिन्नघटत्वनिष्ठप्रकारताकशाब्दबोधापत्त्या स्वानवच्छेदकधर्म्मानवच्छिन्नत्वसम्बन्धावच्छिन्नस्वनिरूपितवृत्तित्वत्वमपि वैशिष्ट्ये निवेश्यम् । प्रकृते घटत्वनिष्ठनिरवच्छिन्नप्रकारतायां स्वानवच्छेदकधर्म्मानवच्छिन्नत्वसम्बन्धावच्छिन्ना प्रमेत्वावच्छिन्नवृत्तिज्ञानीयधर्म्मितावच्छेदकतानिरूपिता या वृत्तिता तस्या असत्त्वाददोषः । कालिकसम्बन्धेन द्रव्यत्वविशिष्टो द्रव्यपदशक्य इति वृत्तिज्ञानजन्यकालिकसम्बन्धावच्छिन्नद्रव्यत्वनिष्ठप्रकारताकोपस्थितौ समवायसम्बन्धेन घटत्वविशिष्टघटस्योद्बोधकान्तराद्भाने घटत्वनिष्ठसमवायसम्बन्धावच्छिन्नप्रकारतायां धर्मितावच्छेदकतावैशिष्ट्यस्योक्तसम्बन्धत्रयेण सत्त्वात् समवायसम्बन्धावच्छिन्नघटत्वप्रकारकशाब्दबोधवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्यापि चतुर्थसम्बन्धस्य वैशिष्ट्ये प्रवेशः ।

वस्तुतस्तु उद्बोधकवशादुपस्थितीयप्रकारतासूक्तासूक्तवृत्तिज्ञानीयधर्म्मितावच्छेदकताप्रयोज्यत्वविरहात् स्वप्रयोज्यत्वमात्रं वैशिष्ट्यनियामकं वक्तव्यं तेनैवोक्तदोषाणां निरासः। किञ्च द्रव्यं द्रव्यपदशक्यं घटो घटपदशक्य इति समूहालम्बनं वृत्तिज्ञानं द्रव्यपदशक्यमित्यंशे अप्रामाण्यज्ञानास्कन्दितं ततो घटत्वावच्छिन्नोपस्थिताबुद्बोधकान्तराद्द्रव्यत्वावच्छिन्नस्य भाने द्रव्यत्वनिष्ठसमवायसम्बन्धावच्छिन्न निरवच्छिन्न प्रकारतायामुक्तचतुष्टयसम्बन्धेनोपस्थितिजनकसमूहालम्बनात्मकवृत्तिज्ञानीयधर्म्मितावच्छेदकताया वैशिष्ट्यसत्त्वेन द्रव्यत्वप्रकारकशाब्दबोधवारणं प्रयोज्यत्वनिवेशाधीनमेवेति दिक्।

ननु घटत्वादिप्रकारकोपस्थितिजनकशक्तिज्ञानानि नानाविधानि। तथा हि घटो घटपदशक्यत्ववान् शक्तिसम्बन्धेन घटो घटपदविशिष्टः इत्याकारकौ शक्तिनिष्ठप्रकारताकशक्तिनिष्ठसंसर्गताकौ घटत्वनिष्ठविशेष्यतावच्छेदकताकौ घटशक्तं घटपदं शक्तिसम्बन्धेन घटविशिष्टं घटपदमित्याकारकौ शक्तिनिष्ठप्रकारताकशक्तिसंसर्गकघटत्वरूपानुपूर्व्यवच्छिन्नविशेष्यताकौ च। तत्राद्यज्ञानजन्योपस्थितीयघटत्वनिष्ठप्रकारता तु उपस्थितिजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपितघटत्वनिष्ठावच्छेदकताविशिष्टाऽस्ति। इतरेषु ज्ञानेष्वाद्यज्ञानीया वृत्तिनिष्ठा संसर्गताऽस्ति। न तु प्रकारताऽग्रिमज्ञानीयविशेष्यतावच्छेदकताघटत्वरूपानुपूर्वीनिष्ठा तद्वैशिष्ट्यमुपस्थितीयघटत्वनिष्ठप्रकारतायां नास्तीत्यन्तिमज्ञानत्रयजन्योपस्थितयः स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासम्बन्धेन घटत्वे न सन्तीति तत्र प्रकारतासम्बन्धेन शाब्दबोधानापत्तिः। निरुक्तावच्छेदकतानां घटत्वनिष्ठानां स्वजनकज्ञानीयवृत्तिनिष्ठविषयतया परम्परया निरूपितत्वेनानुगमय्य तद्विशिष्टप्रकारताया उपस्थितिकारणतावच्छेदकसम्बन्धत्वे घटो घटपदशक्य इति वृत्तिज्ञानजन्यघटत्वप्रकारकोपस्थिताबुद्बोधकान्तराद्घटत्वरूपानुपूर्व्यवच्छिन्नादेर्भाने आनुपूर्वीनिष्ठप्रकारताया अपि निरुक्तविषयतया विशिष्ट-

त्वेन तादृशप्रकारतासम्बन्धेन घटत्वरूपानुपूर्व्या तादृशसमूहालम्बनोपस्थिते-स्सत्त्वेन तत्र शाब्दबोधापत्तिरतो घटत्वनिष्ठावच्छेदकतानां विशिष्य स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वेन स्वजनकज्ञानीयवृत्तिनिष्ठसंसर्गतानिरूपितप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वेन स्वजनकज्ञानीयशक्तत्वनिष्ठप्रकारतानिरूपितावच्छेदकतावच्छेदकतात्वेन स्वजनकज्ञानीयशक्तत्वसंसर्गनिष्ठसंसर्गतानिरूपितप्रकारतावच्छेदकतात्वेन प्रवेश्य तत्तदवच्छेदकताविशिष्टप्रकारतात्मकेनासम्बन्धेनोपस्थितोनां पृथक् पृथक् कारणत्वे परस्परजन्यबोधे परस्परव्यभिचारवारणाय स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासम्बन्धेनोपस्थित्यव्यवहितोत्तरं प्रकारतासम्बन्धेन शाब्दबोधं प्रति स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासम्बन्धेनोपस्थितिः कारणम्। एवं क्रमेण चत्वारः कार्य्यकारणभावाः स्युः। एवं वृत्तित्वस्यानुगतानतिप्रसक्तस्य दुर्वचतया समानविषयकशाब्दबोधं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकतया समानविषयकप्रत्यक्षसामग्र्यभावेऽपि शाब्दसामग्र्यां प्रवेश्यः। शाब्देच्छायां समानविषयकप्रत्यक्षसामग्री सत्त्वेऽपि शाब्दबोधोत्पत्त्या शाब्देच्छाविरहविशिष्टप्रत्यक्षसामग्र्यभावः शाब्दसामग्र्यां प्रवेशनीयः। तथा च शक्तिज्ञानाधीनः शाब्दबोधो जायतामितिच्छासत्त्वे प्रत्यक्षसामग्रीसत्त्वे लक्षणाज्ञानाधीनोपस्थितिघटितशाब्दसामग्रीसत्त्वे शाब्दबोधवारणाय शक्तिज्ञानाधीनोपस्थितिजन्यशाब्देच्छाविरहविशिष्टप्रत्यक्षसामग्र्यभावविशिष्टा शक्तिज्ञानाधीनोपस्थितिः कारणं लक्षणाज्ञानाधीनोपस्थितिजन्यशाब्देच्छाविरहविशिष्टप्रत्यक्षसामग्र्यभावविशिष्टा लक्षणाज्ञानाधीनोपस्थितिः कारणमित्येव शक्तित्वेन लक्षणात्वेन शक्तिलक्षणे प्रवेश्य कार्य्यकारणभावो वक्तव्य इति शक्तिलक्षणान्यतरत्वेनापि तयोरनुगमासम्भवेन घटः पटपदशक्यसम्बन्धी, घटः स्वशक्यसम्बन्धित्वरूपलक्षणात्मकसम्बन्धेन पटपदविशिष्टः, घटसम्बन्धिशक्तं पटपदं, स्वसम्बन्धिशक्तत्वसम्बन्धेन घटविशिष्टं पटपदमिति चतुर्विधलक्षणाज्ञानाधीनोपस्थितीनाम-

-पत्तेर्वारणात् । न च पदार्थेऽपि प्रकारतासम्बन्धेन शाब्दबोधो-त्पत्त्या तत्र निरुक्तप्रकारतासम्बन्धेन पदार्थोपस्थितेरभावात्प्रकार-

---

प्येकरूपेण कारणत्वासम्भवात् पृथक् पृथक् कारणत्वमुक्त्वा परस्परजन्य-बोधे व्यभिचारवारणायाव्यवहितोत्तरत्वं कार्य्यतावच्छेदककोटौ निवेश्य चत्वारः कार्य्यकारणभावाः स्युः । एवञ्चैकस्यापि कार्य्यस्य धर्म्मितावच्छे-दकतासम्बन्धेन शाब्दबोधं प्रति व्यापकताया अभावेन धर्म्मितावच्छेदकता-सम्बन्धेन शाब्दबोधोत्पत्तौ तत्कारणीभूतोपस्थित्यनपेक्षणादनुपस्थितदशायां द्रव्यत्वादौ धर्म्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानबलात् धर्म्मितावच्छे-दकतासम्बन्धेन शाब्दबोधो दुर्वार एवेति चेत्—अत्रोच्यते । निरुक्तकार्य्य-तावच्छेदकधर्म्माणां प्रकारतासम्बन्धेन जायमानशाब्दबोधत्वव्याप्यतया व्याप्यधर्म्मावच्छिन्ने कार्य्ये जननीये व्यापकधर्म्मावच्छिन्नसामग्र्या अपेक्ष-णात् । अव्यवहितोत्तरत्वनिवेशे निरुक्तसम्बन्धेनोपस्थित्यनुत्तरं शुद्धप्रका-रतासम्बन्धेनोद्बोधकवशादुपस्थितद्रव्यत्वे शाब्दबोधापत्तिवारणाय व्यापक-धर्म्मावच्छिन्ने कार्य्ये व्याप्यधर्म्मावच्छिन्नकार्य्यसामग्र्या अपेक्षा वक्तव्या । तथा च तदन्तर्गता या विशिष्टप्रकारतासम्बन्धेनोपस्थितिस्तस्या अभावा-न्नापत्तिः । धर्म्मितावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति प्रकारतासम्बन्धेन शाब्दबोधस्य व्यापकतया येन सम्बन्धेन यद्धर्म्मावच्छिन्नकार्य्यं प्रति येन सम्बन्धेन यद्धर्म्मावच्छिन्नकार्य्यस्य व्यापकतेत्यादिमूलोक्तरीत्या धर्म्मिता-वच्छेदकतासम्बन्धेन शाब्दबोधं प्रति व्यापकसामग्र्यन्तर्गताया विशिष्टप्रका-रतासम्बन्धेनोपस्थितेरपेक्षणान्नानुपस्थितिदशायां धर्म्मितावच्छेदकतासम्ब-न्धेन शाब्दबोधापत्तिरिति ।

नीलो घट इत्यादौ नीले प्रकारतासम्बन्धेन शाब्दबोधो भवति प्रका-रतासम्बन्धेनोपस्थितिर्नास्तीति व्यभिचार इत्याह—न च पदार्थेऽपीत्यादि । प्रकारनिष्ठप्रत्यासत्त्येति । प्रकारतासम्बन्धेनेत्यर्थः । न च निरुक्तधर्म्मिता-

निष्ठप्रत्यासत्त्या पदार्थोपस्थितेर्हेतुता व्यभिचारेण कल्पयितुमशक्येति वाच्यम्। परामर्शकारणताविचारदर्शितदिशा व्यभिचारस्य

---

वच्छेदकता विशिष्टविषयतैवोपस्थितिनिष्ठकारणतावच्छेदकसम्बन्धोऽस्तु। वैशिष्ट्यञ्च स्वप्रयोज्यत्वस्वनिरूपितधर्म्मिताप्रयोज्यत्वैतदन्यतरसम्बन्धेन। ततश्च न व्यभिचार इति वाच्यम्। नीलो घट इत्यादौ मुख्यविशेष्ये घटेऽपि तादृशसम्बन्धेनोपस्थितेस्सत्त्वेन प्रकारतासम्बन्धेन शाब्दबोधाभावे नान्वयव्यभिचारस्य तावतापि सत्त्वात्। विषयतामात्रस्य कार्यतावच्छेदकत्वे तत्र विषयतासम्बन्धेन शाब्दबोधस्यापि सत्त्वान्न व्यभिचार इति तु न संसर्गे व्यतिरेकव्यभिचारापत्तेः। संसर्गताभिन्नविषयतायाः प्रवेशे सामान्यलक्षणानभ्युपगन्तृमते शक्तिग्रहाविषयस्यापूर्वव्यक्तेरपि योग्यतावलेन शाब्दबोधोत्पत्त्या तत्र व्यभिचारापत्तेः।

परामर्शकारणताविचारदर्शितेत्यादि। समवायसम्बन्धेन धूमहेतुकानुमितौ समवायसम्बन्धेन धूमहेतुकपरामर्शज्ञानस्यात्मनिष्ठप्रत्यासत्त्या कारणत्वोपगमे पक्षतावच्छेदकानन्त्यात् कार्य्यकारणभावानन्त्यापत्त्या धर्म्मितावच्छेदकतासम्बन्धेन धूमहेतुवह्नित्वावच्छिन्नप्रकारताकानुमितौ धर्म्मितावच्छेदकतासम्बन्धेन वह्निव्याप्यधूमत्वावच्छिन्नप्रकारताकपरामर्शज्ञानस्य लाघवात् धर्म्मितावच्छेदकनिष्ठप्रत्यासत्त्या कारणत्वे स्वीकृते भाविज्ञानमप्रमेत्यप्रामाण्यज्ञानानन्तरं वह्निव्याप्यधूमवान् पर्वत इति परामर्शस्ततो वह्निव्याप्यालोकवद्द्रव्यमिति परामर्शः। तस्मिन् क्षणेऽप्रामाण्यज्ञानस्य नाशादप्रामाण्यज्ञानानास्कन्दितस्य परामर्शद्वयस्य सत्त्वेन तदनन्तरं समूहालम्बनात्मकं पर्वतो वह्निमान् द्रव्यं वह्निमदित्याकारकमुभयलिङ्गकानुमित्यात्मकं ज्ञानं जायते। तत्र कारणीभूतस्य वह्निव्याप्यधूमत्वावच्छिन्नप्रकारताकपरामर्शस्य धर्म्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे विरहात् धूमलिङ्गकानुमितेश्च सत्त्वादेवं कारणीभूतस्य वह्निव्याप्यालोकत्वावच्छिन्न-

वारणीयत्वादिति चेत्तर्हि तद्धर्मावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदस्यापि हेतुतायाः स्वीकरणीयतया घटो घट इत्यादि-

---

प्रकारकपरामर्शज्ञानस्य धर्मितावच्छेदकतासम्बन्धेन पर्वतत्वे विरहाद्धर्मितावच्छेदकतासम्बन्धेनालोकहेतुकानुमितेश्च सत्त्वात्प्राप्तव्यभिचारवारणाय धर्मितावच्छेदकतासम्बन्धेन वह्निव्याप्यधूमत्वावच्छिन्नप्रकारताकपरामर्शज्ञानं स्वीयधर्मितावच्छेदकताविशिष्टधर्मितावच्छेदकतासम्बन्धेन धूमहेतुकवह्नित्वावच्छिन्नप्रकारताकानुमितिं प्रति कारणमित्येवं रीत्या कार्यकारणभावः कारणतावच्छेदकसम्बन्धस्य वैशिष्ट्यं कार्यतावच्छेदकसम्बन्धे निवेश्य स्वीकृतोऽस्ति । प्रकृते द्रव्यत्वन्तु स्यनुमितीयधर्मितावच्छेदकतायां धूमहेतुकपरामर्शीयधर्मितावच्छेदकतावैशिष्ट्यविरहात् पर्वतत्ववृत्त्यालोकहेतुकानुमितीयधर्मितावच्छेदकतायामालोकलिङ्गकपरामर्शीयधर्मितावच्छेदकतावैशिष्ट्यविरहान्न व्यभिचारः । तथैव प्रकृतेऽपि स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्ट प्रकारतासम्बन्धेनोपस्थितिः स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टस्वीयप्रकारताविशिष्टप्रकारतासम्बन्धेन शाब्दबोधं प्रति कारणमित्येव कारणतावच्छेदकसम्बन्धवैशिष्ट्यं कार्यतावच्छेदकसम्बन्धे निवेश्य कार्यकारणभावः स्वीक्रियते । नीलो घट इत्यादौ प्रकारे नीले या शाब्दबोधीया प्रकारता तत्र स्वजनकेत्यादिप्रकारतान्तकारणतावच्छेदकसम्बन्धवैशिष्ट्यविरहेण न व्यभिचार इत्याशयः । अक्षरार्थस्तु परामर्शकारणताया यो विचारस्तत्र दर्शिता या दिक् तया तद्रीत्या व्यभिचारो वारणीय इति ।

एतत्पर्यन्तग्रन्थेनापत्तिं दृढीकृत्य समाधत्ते—तद्धर्मावच्छिन्नाभेदसंसर्गावच्छिन्नेत्यादिना । प्रकारतावच्छेदकभेदो विशेष्यतावच्छेदके अभेदान्वये

स्थले न शाब्दबोधापत्तिः। स घट इत्यादिवाक्याज्जातित्वादिना घटत्वादिधर्मितावच्छेदककस्य स्वरूपतो घटत्वादिप्रकारतावच्छेदककस्य घटः स इत्यादिवाक्यात्स्वरूपतो घटत्वादिधर्म्मितावच्छेदककस्य जातित्वादिविशिष्टघटत्वावच्छिन्नप्रकारताकस्य च शाब्दबोधस्योपपत्तये विशेष्यत्वप्रकारत्वयोरवच्छेदकत्वे निरवच्छिन्नत्वेन विशेषणीये। घटो नीलघट इत्याद्यन्वयबोधस्य प्रामाणिकत्वेऽन्यत्र

---

अपेक्षत इति भावः। न शाब्दबोधापत्तिरिति। घटत्वे घटत्वभेदाभावादिति भावः। जातित्वादिनेति। स घट इत्यत्र जातिमान् तत्पदार्थस्तत्र जातिर्घटत्वं विशेष्यतावच्छेदकमवच्छेदकता जातित्वावच्छिन्नेति घटो घट इत्यतो विशेषः। घटस्स इत्यत्र जातिमान् तत्पदार्थस्तत्र प्रकारतावच्छेदकं घटत्वं जातिः। प्रकारतावच्छेदकता च जातित्वावच्छिन्नेति पूर्वस्माद्विशेषः। उभयत्र शाब्दबोध इष्यते। स इदानीं न स्यात् प्रकारतावच्छेदकविशेष्यतावच्छेदकयोरैक्यादिति भावः। विशेष्यत्वप्रकारत्वयोरवच्छेदकत्व इति। विशेष्यतावच्छेदकताप्रकारतावच्छेदकतानिरवच्छिन्ना कार्य्यतावच्छेदके प्रवेश्या इति भावः। तथा च तद्धर्म्मनिष्ठनिरवच्छिन्नावच्छेदकताकाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति तद्धर्म्मभेदः कारणमिति पर्य्यवसितम्। निरुक्तप्रयोगद्वये जायमानशाब्दबोधौ च न निरवच्छिन्नप्रकारतादिविशेष्यतावच्छेदकताविशेष्यतावच्छेदकताकाविति न तत्र प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदापेक्षेति प्रकारतावच्छेदकविशेष्यतावच्छेदकयोरभेदेऽपि शाब्दबोधोपपत्तिः।

घटो नीलघट इत्याद्यन्वयबोधस्य प्रामाणिकत्वे अन्यत्रेति। तत्र हि घटत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन घटत्वे शाब्दबोधस्तत्र च घटत्वभेदाभावाद्व्यभिचारः प्राप्तस्तद्वा-

रणार्थमन्यत्र दर्शिता पर्य्याप्तिनिवेशरूपा दिक् आश्रयितऽत्येत्यर्थस्तथा च तद्धर्मपर्य्याप्तावच्छेदकताकाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितेत्यादिरूपः कार्य्यतावच्छेदकसम्बन्धः। प्रकृते च नीलघटत्वोभयपर्य्याप्ता अवच्छेदकता न घटत्वपर्य्याप्तेति घटत्वभेदाभावेऽपि न दोषः।

ननु नीलघटत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधे यदि नीलभेदघटत्वभेदयोः कारणत्वं तर्हि विधेयकोटावधिकावगाहिनोऽपि घटो नीलघट इति बोधस्यानापत्तिर्घटत्वे उक्तभेदद्वयस्यासत्त्वात्। यदि नीलघटत्वोभयभेदस्य तत्त्वं घटत्वे तस्य सत्त्वेन न दोषस्तर्हि तस्य केवलान्वयित्वेन समानोद्देश्यविधेयकस्य नीलघटो नीलघट इत्याकारकस्यापि शाब्दस्यापत्तिः। घटत्वे नीले वा विशेष्यतावच्छेदके नीलघटत्वोभयभेदस्य सत्त्वादिति चेत्-न। तद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोग्यवच्छेदकतानिरूपितावच्छेद्यतावदभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबोधं प्रति तद्भेदस्य कारणत्वाङ्गीकारात् घटो नीलघट इत्यादौ विधेयांशेऽधिकावगाहिनः शाब्दबोधस्य घटत्वनीलोभयगतद्वित्वरूपावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोग्यवच्छेदकतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन घटत्वगतैकत्वे सत्त्वेन तत्र घटत्वनीलोभयगतद्वित्वभेदस्यापि सत्त्वेनादोषात्। न चोभयपर्य्याप्ताया अपि प्रकारतावच्छेदकताया वस्तुत्वेन घटत्वे एव पर्य्याप्तिस्तदनुयोगितावच्छेदकञ्च घटत्वगतैकत्वमेव। तथा च तदवच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोग्यवच्छेदकतानिरूपितावच्छेद्यतावदभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन घटत्वगतैकत्वे शाब्दबोधस्तत्र घटत्वगतैकत्वभेदाभावाद्व्यभिचार एवेति वाच्यम्। स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तद्रूपवृत्त्यभेदसम्बन्धा-

वच्छिन्नप्रकारताघटितसम्बन्धस्य विवक्षणात् तेन सम्बन्धेनोक्तप्रकारताया द्वित्व एव वृत्तेः।

ननु जातित्वावच्छिन्नघटत्वनिष्ठप्रकारतावच्छेदकताको यो घटस्स इत्यत्राभेदान्वयबोधस्तदीयप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं घटत्वगतमेकत्वमेव तद्भेदस्य घटत्वगतैकत्वेऽभावाद्व्यभिचारः। न चावच्छेदकताया निरवच्छिन्नाया एव निवेशेन प्रकृते घटत्वगतावच्छेदकताया जातित्वावच्छिन्नत्वान्न दोष इति वाच्यम्। तर्हि नीलघटत्वावच्छिन्नप्रकारताया अपि निरवच्छिन्नावच्छेदकताया घटत्वे एव सत्त्वे न नीले ततश्च स्वनिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन घटत्वनीलोभयावच्छिन्नप्रकारताया अपि घटत्वगतैकत्ववृत्तित्वात् तद्भेदस्य घटत्वगतैकत्वेऽभावात् घटो नीलघट इति विधेयांशेऽधिकावगाहिशाब्दबोधो न स्यादिति चेत्—अत्रोच्यते। स्वनिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन स्वविशिष्टधर्म्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतावच्छेदकतानिरूपितावच्छेद्यतावदभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबोधं प्रति स्वनिरूपितावच्छेदकतावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपभेदः कारणम्। ततश्च विधेयांशेऽधिकावगाहिनो घटो नीलघट इति बोधस्य घटत्वगतैकत्वे नीलघटत्वोभयगतद्वित्वभेदस्य सत्त्वान्नानुपपत्तिः। न वा नीलघटो नीलघट इति बोधस्यापत्तिः। नीलघटत्वोभयगतद्वित्वे नीलघटत्वोभयगतद्वित्वभेदाभावात्।

ननूद्देश्यांशेऽधिकावगाहिनो नीलघटो घट इति बोधस्यापत्तिस्तत्र विशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदके नीलघटत्वोभयगतद्वित्वे प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकघटत्वगतैकत्वभेदस्य सत्त्वादिति चेन्मैवम्। स्वनिरूपिताभेदसम्बन्धावच्छिन्नविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति स्ववि-

शिष्टो भेदः कारणम्। वैशिष्ट्यं स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकधर्म्मावच्छिन्नप्रतियोगिताकत्वस्वनिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकत्वोभयसम्बन्धेन। ततश्च घटत्वगतैकत्वावच्छेदेन नीलघटत्वोभयगतद्वित्वावच्छिन्नप्रतियोगिताकभेदस्य सत्त्वात्। नीलघटत्वोभयगतद्वित्वावच्छेदेन नीलघटत्वोभयगतद्वित्वावच्छिन्नप्रतियोगिताकभेदस्य घटत्वगतैकत्वावच्छिन्नप्रतियोगिताकभेदस्य चासत्त्वात्। विधेयांशेऽधिकावगाहिनः शाब्दबोधस्योपपत्तिरुभयांशे समानावगाहिनः उद्देश्यांशे अधिकावगाहिनश्च नीलघटो घट इत्यस्य नीलघटो नीलघट इत्यस्य चानापत्तिः।

वस्तुतस्तु स घटः घटस्स इत्यनयोः पूर्वोक्तयोर्जातित्वावच्छिन्नावच्छेदकताकप्रकारताविशेष्यताकबोधयोरनुपपत्तिः। तत्रैकत्वावच्छेदेनैकत्वावच्छिन्नप्रतियोगिताकघटत्वभेदाभावात्। तदर्थं निरवच्छिन्नावच्छेदकतायाः प्रवेशे विधेयांशेऽधिकावगाहिनोऽप्यनुपपत्तिस्तत्र निरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य घटत्वगतैकत्वे एव सत्त्वात्।

इदमत्रावधेयम्। स्वनिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन किञ्चिन्निष्ठाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितोक्तनिरवच्छिन्नावच्छेदकताघटितसम्बन्धेन किञ्चिन्निष्ठविशेष्यता तदवच्छेदकतासम्बन्धः कार्य्यतावच्छेदको वक्तव्यः। कारणन्तु पूर्वोक्त एव। ततश्च न दोष इति। यदि च प्रकारदलमेवोद्देश्यं विशेष्यदलञ्च विधेयं विधेयतोद्देश्यतयोः प्रकारताविशेष्यत्वनियतत्वासिद्धेस्तर्हि अधिकावगाहिविशेष्यकस्यापि शाब्दबोधस्येष्टव्यतया कार्य्यकारणभावे प्रकारताविशेष्यतास्थाने विधेयतोद्देश्यते निवेशनीये। विधेयतावच्छेदकतोद्देश्यतावच्छेदकते समानसम्बन्धावच्छिन्ने ग्राह्ये। तेन कालिकसम्बन्धेन घटत्वविशिष्टपरतच्छब्दघटितात् स घट इति वाक्यान्न शाब्दबोधापत्तिरिति दिक्।

दर्शितरीत्या सोऽप्युपपादनीयः। एवं स स इत्यादिवाक्याज्जातित्वाद्यवच्छिन्नधर्मितावच्छेदकताकतद्धर्मावच्छिन्नप्रकारतावच्छेदकताकाभेदान्वयबोधस्य वारणाय तद्धर्मावच्छिन्नावच्छेदकताकप्रकारतानिरूपितधर्म्मितावच्छेदकतावच्छेदकत्वप्रत्यासत्त्या शाब्दबोधं प्रति तद्धर्मभेदस्यापि पृथक्कारणत्वं कल्पनीयम्। एवं दण्डवान् दण्डवानित्यादिवाक्याद्दण्डसंयोगत्वाद्यवच्छिन्नवति तदवच्छिन्नवदभेदान्वयबोधस्य वारणाय दण्डसंयोगत्वाद्यवच्छिन्नावच्छेदकताकप्रकारतानिरूपितविशेष्यतानिरूपितसंयोगत्वाद्यव-

---

निरवच्छिन्नघटत्वादिनिष्ठावच्छेदकताकाभेदसम्बन्धावच्छिन्नप्रकारताकविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दबोधं प्रत्येव घटत्वादिभेदस्य कारणत्वोक्तेर्ज्जातित्वावच्छिन्नघटत्वनिष्ठावच्छेदकताकाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितजातित्वावच्छिन्नघटत्वनिष्ठावच्छेदकताकशाब्दबोधस्य प्राप्तामापत्तिं परिहर्त्तुमाह—स स इत्यादिवाक्यादिति। निरवच्छिन्नप्रकारतावच्छेदकत्वविशेष्यतावच्छेदकत्वकाभेदान्वयबोधे यथा प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदापेक्षा तथाऽवच्छिन्नताहशावच्छेदकताकाभेदान्वये प्रकारतावच्छेदकतावच्छेदकविशेष्यतावच्छेदकतावच्छेदकयोर्भेदस्य कारणत्वमिति भावः। एवमपि प्रकारतानिरूपितसंयोगनिष्ठावच्छेदकतावच्छेदकदण्डस्य विशेष्यतावच्छेदकतावच्छेदकदण्डाद्भेदस्य सत्त्वेन दण्डवान् दण्डवानिति वाक्यात्प्राप्तां शाब्दापत्तिं परिहर्त्तुमाह—दण्डवान् दण्डवानित्यादि। प्रकारतावच्छेदकतावच्छेदकतावच्छेदके विशेष्यतावच्छेदकतावच्छेदकतावच्छेदके भेदस्यापि हेतुत्वं बोध्यम्। प्रमेयत्वेन दण्डत्वस्य यत्र प्रकारतावच्छेदकतावच्छेदकतावच्छेदकत्वं ताहशः दण्डत्वनिष्ठनिरवच्छिन्नस्य विशेष्यतानिरूपितसंय्योगत्वावच्छिन्नावच्छेदकतानिरूपितदण्डनिष्ठावच्छेदकतानिरूपितदण्डत्वनिष्ठ-

च्छिन्नावच्छेदकतानिरूपितावच्छेदकतावच्छेदकत्वसम्बन्धेन शाब्दबोधे दण्डत्वादिभेदस्यापि पृथक्कारणत्वं कल्पनीयम्। अवच्छेदकतायां निरवच्छिन्नत्वनिवेशोऽपि पूर्ववद्बोध्यः।

वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुता कल्प्यते लाघवात्। एवं च घटत्वाद्यवच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति घटत्वाद्यन्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वाद्यवच्छिन्नस्य व्यापकतया घटत्वादौ तादृशविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नोत्पादकसामग्रीविरहेण न तत्र तादृशविशेष्यतावच्छेदकतासम्बन्धे शाब्दबोधापत्तिः। एवं च घटवान् घटवानित्यादिवाक्यस्थलीयशाब्दबोधवारणानुरोधेन धर्म्मितावच्छेदकतावच्छेदकादिनिष्ठप्रत्यास-

---

स्यावच्छेदकत्वस्य निरूपकः -शाब्दबोधः प्रमेयवद्वान् दण्डवानितिवाक्यान्न स्याद्दण्डत्वे दण्डत्वभेदाभावादत आह—अवच्छेदकतायां निरवच्छिन्नत्वमित्यादि। प्रथमावच्छेदकतायां चरमावच्छेदकतायाञ्चेत्यर्थः।

अनेककार्य्यकारणभावकल्पनायां गौरवादाह—वस्तुतस्त्विति। घटत्वभिन्नवृत्तिविषयतासम्बन्धेन ज्ञानं घटत्वभिन्ने एव भवति। तत्र घटत्वभेदोऽप्यस्तीति घटत्वभेदस्य तादृशसम्बन्धेन ज्ञानं प्रति कारणत्वं नानुपपन्नमेवं घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति घटत्वभेदः कारणम्। तच्च ज्ञानं घटत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति व्यापकं यतो घटो द्रव्यमित्यादिवाक्याद्द्रव्यत्वादौ घटत्वभिन्ने एव स बोधो भवति तत्र घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानं वर्त्तत एव। ततश्च व्याप्यकार्य्ये व्यापकस्य कारणमपेक्ष्यत इति नियमात् तादृशशाब्दबोधे घटत्वभेदस्यापेक्षणान्न घटो घट इति वाक्याद्घटत्वे स बोधः। न च जातिमान् घट इति वाक्यात् घटत्वेऽपि जातित्वेन घटत्वनिष्ठा

न्त्या करणत्वान्तरमपि न कल्प्यते। एवमुद्देश्यतावच्छेदकविधेययोरैक्येन[१] एको द्वावित्यादिवाक्यादेकत्वद्वित्वाद्यवच्छिन्ने एकत्वद्वित्वादीनां भेदान्वयबोधानुदयात्, एकत्वद्वित्वत्वाद्यवच्छिन्नसमवायादिसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायादिसंसर्गावच्छिन्नावच्छेदकतावच्छेदकत्वादिसम्बन्धेन शाब्दबुद्धौ एकत्वत्वादिभेदस्य एवं कर्म गच्छतीत्यादौ च कर्मत्वत्वाद्यवच्छिन्ने आधेयतासम्बन्धेन तद्वतोऽन्वयबोधवारणाय कर्म-

---

वच्छेदकताकाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधत्वेन घटत्वावच्छिन्नप्रकारताकोक्तशाब्दबोधो घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानव्याप्यमिति वाच्यम्। व्याप्यशरीरे निरवच्छिन्नावच्छेदकतायाः प्रवेशे नादोषात्। एवं व्याप्यशरीरे घटत्वेतरधर्मानवच्छिन्नत्वमपि प्रकारतायां देयं तेन नीलघटो घट इति वाक्याद्घटत्वे जायमानशाब्दबोधीयघटत्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वेऽपि न क्षतिः। प्रकारतायां घटत्वेतरनीलत्वेनावच्छेदात्। एवमेव जातित्वावच्छिन्नावच्छेदकताकप्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेदकतासम्बन्धेन शाब्दबोधः जातित्वाभिन्ने एव भवति। एवं दण्डत्वावच्छिन्नदण्डनिष्ठावच्छेदकतानिरूपितसंयोगनिष्ठावच्छेदकतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेदकतावच्छेदकतासम्बन्धेन दण्डत्वभिन्ने एव शाब्दबोधो भवतीति तयोरपि व्यापके जातित्वान्यवृत्तिविषयतासम्बन्धेन दण्डत्वान्यवृत्तिविषयतासम्बन्धेन वर्त्तमाने ज्ञाने इति तयोरपि शाब्दबोधयोर्जातित्वभेददण्डत्वभेदयोः कारणत्वात् जातित्वे दण्डत्वे च न तौ शाब्द-

---

[१]अनुमितिवारणाय धर्म्मितावच्छेदकतासम्बन्धेनानुमितौ विधेयभेदस्येत्यधिकः पाठो प्राचीनहस्तलिखितपुस्तके।

स्वत्वाद्यवच्छिन्नावच्छेदकताकाधेयतासम्बन्धावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकसम्बन्धेन शाब्दबोधे कर्मत्वत्वादिभेदस्य घटो न घट इत्याद्यनुमितेः शाब्दबोधस्य च वारणाय घटत्वावच्छिन्नभेदप्रकारतानिरूपितधर्मितावच्छेदकतासम्बन्धेनानुमितौ शाब्दबोधे च घटत्वादिभेदस्य हेतुत्वान्तरकल्पनमनादेयमेव। तद्धर्मभेदस्यैकैककारणतयैव सकलातिप्रसङ्गवारणसंभवादिति कृतं पल्लवितेन।

---

बोधौ जातिमान् जातिमान् दण्डवान् दण्डवानिति वाक्याभ्यामिति बोध्यम्। एवमेव एकः द्वौ घटो न घटः इत्यतोऽपि एकत्वावच्छिन्ने एकत्वस्य द्वित्वावच्छिन्ने द्वित्वस्य घटत्वावच्छिन्ने घटभेदस्य चान्वयविषयकावनुमितिशाब्दबोधौ न यतः एकत्वत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेदकतासम्बन्धेन एवं द्वित्वत्वावच्छिन्नप्रकारताघटितोक्तसम्बन्धेन घटत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभावानुयोगितावच्छेदकतासम्बन्धेन शाब्दबोधोऽनुमितिर्वा एकत्वत्वं द्वित्वत्वघटत्वेभ्यो भिन्नेष्वेव भवति। तयोरपि एकत्वत्वाद्यन्यवृत्तिविषयतासम्बन्धेन ज्ञानं व्यापकमिति तत्कारणस्यैकत्वत्वादिभेदस्य तत्रापेक्षितत्वेन तदभावादेवैकत्वत्वादिषु तयोरभावोपपत्तावेकत्वत्वादिभेदस्य पृथक् कारणत्वाकल्पनेन लाघवम्। न च नञोऽभावे येन सम्बन्धेन यद्धर्मावच्छेदेन यद्वत्ता यद्वाक्येन प्रतीयते नञ्घटितेन तेन वाक्येन तत्सम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभावस्तद्धर्मावच्छेदेन प्रत्याय्यत इति नियमात् घटो घट इति वाक्यात् स्वरूपसम्बन्धेन घटाभेदवत्ताया घटत्वावच्छेदेनाप्रतीतेस्तदवच्छेदेन घटाभेदाभावप्रतीत्यप्रसक्तेः कथं तत्कारणकल्पनं लाघवमिति वाच्यम्। येन सम्बन्धेन यद्धर्मावच्छेदेन यद्वत्ता प्रीतौ साकाङ्क्षं यद्वाक्यं तेन वाक्येन नञ्घटितेन तेन सम्बन्धेन तदवच्छेदेन तदभावः प्रत्याय्यत इत्येव नियमेन

घटो घट इति वाक्यस्य तादृशबोधाजनकत्वेऽपि तादृशबोधे साकाङ्क्षत्वेनादोषात्। नीलघटत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधस्य जातित्वावच्छिन्नघटत्वनिष्ठावच्छेदकताकाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधस्य च नीलघटो घटः स घट इत्यादिवाक्यजन्यघटत्वेऽप्युदयेन. घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रत्यव्याप्यत्वेन तत्र घटत्वभेदानपेक्षणात्तयोस्तत्रोत्पत्तौ न बाधकमिति दिक्। न चोक्तबोधौ यदि न व्याप्यौ तर्हि नीलघटो नीलघटः स स इति वाक्याभ्यां घटत्वे तयोरापत्तिस्तत्र घटत्वभेदानपेक्षणादिति वाच्यम्। नीलत्वानवच्छिन्नविशेष्यतानिरूपितजातित्वावच्छिन्नावच्छेदकतासम्बन्धेन नीलघटत्वावच्छिन्नप्रकारताकस्य जातित्वावच्छिन्नघटत्वनिष्ठावच्छेदकताकशाब्दबोधस्य च तत्रासम्भवात् विशेष्यदले नीलत्वस्य जातित्वस्य चोपस्थितत्वा भानस्यावश्यकत्वात्। कथञ्चित्तयोरभाने शाब्दबोधस्येष्टत्वात्। न च नीलघटो नीलं द्रव्यमित्यादौ द्रव्यत्वे प्रसिद्धस्य नीलघटत्वावच्छिन्नप्रकारतानिरूपितनीलत्वावच्छिन्नविशेष्यतानिरूपितानवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दबोधस्य घटत्वत्वेन घटत्वोपस्थापकेन जातित्वेन घटत्वोपस्थापकेन च तत्पदेन घटिते स स इत्यादौ च प्रसिद्धस्य शाब्दबोधस्य घटत्वे जातित्वे च नीलघटो नीलघटः स स इत्यादौ शाब्दबोधापत्तिरिति वाच्यं तयोरप्युक्तज्ञानव्याप्यत्वेन तादृशभेदापेक्षणात्। न च कालिकसम्बन्धेन घटत्वविशिष्टे समवायसम्बन्धेन घटत्वविशिष्टस्याभेदान्वयोऽनुभवसिद्धस्तत्र घटत्वनिष्ठनिरवच्छिन्नावच्छेदकताकाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधस्य घटत्वेऽपि सत्त्वान्न घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानव्यापकत्वस बोध इति वाच्यं घटत्वनिष्ठनिरवच्छिन्नावच्छेदकताविशिष्टावच्छेदकतासम्बन्धेन शाब्दबोधस्य व्याप्यत्वात्। वैशिष्ट्यं स्वनिरूपितावच्छेद्यतावदभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन उद्देश्यस्य यत्र प्रकारता विधेयस्य विशेष्यता तत्र विशेष्यां-

भेदान्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थेन च सममेव जायते न त्वन्येन। सत्यपि पदार्थोपस्थितियोग्यताज्ञानादिरूपकारणकलापे राजा पुरुषः भूतलं घट इत्यादौ पुरुषाद्यंशे राजभूतलादेः स्वत्वाधेयतासम्बन्धेन तण्डुलः पचति चैत्रः पच्यते इत्यादौ कर्मत्वकर्तृत्वादिसम्बन्धेन तण्डुलचैत्रादौ पाकादेः स्वकर्मकत्वस्वकर्तृकत्वादिसम्बन्धेन पाकाद्यंशे वा

---

शेऽविकावगाहिशाब्दबोधस्येष्टतया तत्र दोषवारणाय व्याप्यदले प्रकारताविशेष्यतयोः स्थाने विधेयतोद्देश्यतयोः प्रवेशः कार्य्यः।

अभेदान्वयविचारं समाप्य भेदान्वयविचारः प्रारभ्यते—भेदान्वयबोधश्चेत्यादिना। भेदान्वयेत्यस्याभेदभिन्नसम्बन्धबोध इत्यर्थः। प्रातिपदिकार्थस्य धात्वर्थस्य च प्रत्ययार्थे निपातार्थे एवाभेदभिन्नसम्बन्धेनान्वय इत्यर्थः। प्रातिपदिकपदप्रयोज्यधातुपदप्रयोज्ययोरभेदातिरिक्तसम्बन्धावच्छिन्नप्रकारतयोः प्रत्ययनिपातान्यतरपदप्रयोज्यविशेष्यतानिरूपितत्वनियम इति पर्य्यवसितोऽर्थः। नियमस्वीकारे हेतुमाह—राजा पुरुष इत्यादि। राजा पुरुषः भूतलं घट इति वाक्यात् स्वत्वसम्बन्धेन राजविशिष्टः पुरुषः आधेयत्वसम्बन्धेन भूतलविशिष्टो घट इति बोधाभावः। उक्तनियमे हेतुरिति भावः। प्रातिपदिकार्थस्य प्रातिपदिकार्थेऽभेदभिन्नसम्बन्धेनान्वये दोषमुक्त्वा धात्वर्थस्य प्रातिपदिकस्य तेन सम्बन्धेनान्वये दोष उच्यते। तण्डुलः पचतीत्यादि। न च तण्डुलगतकर्म्मत्वस्य चैत्रगतकर्त्तृत्वस्यानुक्तत्वात् तण्डुलपदचैत्रपदाद् द्वितीयातृतीययोरनुशासनादयं प्रयोगो न प्रसक्त इति वाच्यम्। प्रातिपदिकार्थं प्रति कर्म्मत्वकर्त्तृत्वयोर्विशेष्यतयाऽन्वयबोधतात्पर्य्ये एव कर्म्मणि द्वितीयेत्यादिना प्रातिपदिकात् द्वितीयादेरनुशासनात्। प्रकृते च कर्म्मत्वकर्त्तृत्वयोस्संसर्गतया भानस्य प्रातिपदिकार्थस्य धात्वर्थे भेदसम्बन्धेनान्वये दोष उच्यते। स्वकर्म्मकत्वेत्यादिना। विभक्त्यर्थमन्तराकृत्येति। उक्तनियमः साक्षात्स-

तण्डुलचैत्रादेरन्वयाबोधान्निपातातिरिक्तप्रातिपदिकार्थयोः क्रियाताद्दशप्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयबोधस्याव्युत्पन्नत्वात् विभक्त्यर्थमन्तराकृत्य तयोरप्यन्वयबोधात्साक्षादिति निपातातिरिक्तत्वादिविशेषणात् भूतले न घटः घटो न पट इत्यादौ घटादेर्नञर्थाभावेन मुखं चन्द्र इवेत्यादौ मुखचन्द्रादीनामिवार्थसादृश्यादिना न कलञ्जं भक्षयेदित्यादौ नैयायिकमते नञुपस्थाप्येन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वादिरूपविध्यर्थाभावेन धात्वर्थ

---

म्बन्धविषयक एव। राज्ञः पुरुष इत्यादौ विभक्त्यर्थस्वत्वद्वारा राजरूपप्रातिपदिकार्थस्य पुरुषरूपप्रातिपदिकार्थेऽन्वयस्येष्टत्वादिति भावः। निपातार्थे प्रातिपदिकार्थान्वयस्थलमाह—भूतले न घट इत्यादि। नञर्थो भावे घटस्य स्वप्रतियोगिकत्वसम्बन्धेनान्वयस्तथा च घटाभावो भूतलवृत्तिरिति बोधः। यदि च प्रतियोग्यभावान्वय इति न्यायेन नञोऽसत्त्वे यत्र येन यद्वत्ता प्रतीयते यादृशवाक्येन तादृशवाक्येन नञ्घटितेन तत्र तेन तदभावस्यैव प्रत्यायनादुक्तबोधो न युक्तः किन्तु भूतलवृत्तित्वाभाववान् घट इत्येव युक्तः। भूतले घट इत्यतो भूतलवृत्तित्ववान् घट इत्येव बोधात् तथाऽपि निपातार्थप्रातिपदिकार्थयोरन्वयो जात एवेति बोध्यम्।

घटो न पट इत्यादाविति—नञर्थे भेदे घटस्य स्वप्रतियोगिकत्वसम्बन्धेन भेदस्य च पटे स्वरूपसम्बन्धेनान्वयः। मुखं चन्द्र इवेत्यादाविति। इवार्थसादृश्ये स्वप्रतियोगिकत्वसम्बन्धेन चन्द्रस्य मुखे स्वरूपसम्बन्धेन सादृश्यान्वयः। निपातातिरिक्तत्वनिवेशाभावे नञि वयोरपि नामत्वात्तदर्थे तदर्थस्य वा भेदान्वयश्चन्द्रादेर्न स्यादिति भावः। न कलञ्जं भक्षयेदित्यादाविति। नञर्थोऽभावः तस्मिन् लिङर्थस्य बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपस्य स्वप्रतियोगिकत्वसम्बन्धेनान्वयेऽभावस्य च स्वरूपसम्बन्धेन भक्षणेऽन्वयः। तथा च बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वप्रतियो-

भक्षणादेरनुयोगितया, गुरुमते तु विध्यर्थापूर्वांशे विशेषणतयान्वितेन नञुपस्थाप्याभावेन धात्वर्थभक्षणादेः प्रतियोगितयाऽन्वयेऽपि न क्षतिः । राजपुरुष इत्यादिसमासस्थले तु पुरुषादिपदार्थेन समं राजादिपदार्थस्य न भेदान्वयबोधः किन्तु तेन समं विभक्त्यन्तार्थविशिष्टलाक्षणिकराजादिपदोपस्थाप्यराजसम्बन्ध्यादेरभेदान्व-

---

गिकाभावविशिष्टं कलञ्जभक्षणमिति बोधः । बलवदनिष्टाननुबन्धित्वं बलवदनिष्टाजनकत्वम् । अत्र विशेषणस्य बलवदनिष्टाजनकत्वस्य विशेष्यस्येष्टसाधनत्वस्य चाभावप्रयुक्तो विशिष्टाभावस्तेन बलवदनिष्टजनकत्वं भक्षणे प्रतीयते । नैयायिकमते अत्र धात्वर्थे नञ्रूपनामार्थस्यान्वयः ।

गुरुमते चेति । प्रभाकरमीमांसकमते भक्षणस्य स्वप्रतियोगिकत्वसम्बन्धेन नञर्थाभावेऽन्वयो भावस्य च प्रयोज्यत्वसम्बन्धेन लिङर्थेऽपूर्वे अन्वयोऽपूर्वञ्च पुण्यं तथा च कलञ्जभक्षणप्रतियोगिकाभावप्रयोज्यमपूर्वमिति बोधः । नैयायिकमते कलञ्जभक्षणमनिष्टजनकं न तु तद्भक्षणाभावः पुण्यजनकः । गुरुमते कलञ्जभक्षणाभावजन्यं पुण्यं न तु कलञ्जभक्षणमनिष्टजनकमिति प्रतीयत इति भेदः । ननु तर्हि कलञ्जभक्षणे कस्मान्न प्रवर्त्तते गुरुमत इति चेत्—पुण्यप्रयोजकाभावप्रतियोगित्वरूपस्य पुण्यप्रतिबन्धकत्वस्य भक्षणे शब्दात्प्रतीतौ पुण्यकामस्य पुण्यप्रतिबन्धके कलञ्जभक्षणे प्रवृत्त्यनुपपत्तेः । समासस्थले विशेषणवाचकपदप्रकृतिकलुप्तविभक्तेरनुसन्धानं विनैव शाब्दबोधोत्पत्त्या स्वत्वसम्बन्धेन राजरूपनामार्थस्यैव पुरुषरूपनामार्थेऽन्वयो वाच्यः । स चोक्तनियमविरुद्ध इत्यत आह—राजपुरुष इत्यादिसमासस्थले त्विति । तत्र राजादिपदस्य विशेषणवाचकस्य षष्ठ्यर्थस्वत्वादिविशिष्टे लक्षणा । तस्य चाभेदेनैव पुरुषाद्युत्तरपदार्थेऽन्वय इति नोक्तव्युत्पत्तिविरोधः । एतदेवाह—किन्त्वित्यादिना ।

यबोध एवेति न दोषः । एवं मुखं चन्द्र इत्यादिरूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशलक्षणया मुखादौ चन्द्रादिसदृशाभेदान्वयबोध एव, न तु सादृश्यादिसम्बन्धेन चन्द्रादेर्मुखादावन्वय इति न तत्र व्यभिचारः ।

केचित्तु रूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशे न लक्षणा किंतु तत्र मुख्यार्थचन्द्रादेरेवाभेदभ्रमो मुखादौ । मुखं न चन्द्र इत्यादिविशेषदर्शनदशायां च न तत्र शाब्दोऽभेदप्रत्ययः अपि तु शब्दजन्यविशकलितपदार्थोपस्थितिमूलको मानस एवाहार्याभेदभ्रम इत्याहुः ।

---

एवं मुखं चन्द्र इति । अत्रापि चन्द्रपदार्थस्य मुखेऽभेदान्वयस्य बाधेन स्वप्रतियोगिकसादृश्यवत्वस्य च भेदसम्बन्धत्वेन तेन सम्बन्धेनान्वये पूर्वोक्तव्युत्पत्तिविरोधेन च चन्द्राद्युपमानवाचकपदस्य चन्द्रसदृशे लक्षणया चन्द्रसदृशाभिन्नं मुखं इति बोध इति न व्युत्पत्तिविरोधः । ननु रूपकस्थलेऽपि लक्षणया सादृश्यप्रतीतावुपमालङ्काराद्रूपकालङ्कार आलङ्कारिकसिद्धान्तसिद्धं चमत्कारवैलक्षण्यन्नोपपद्येत । विषयवैलक्षण्यस्यैव चमत्कारवैलक्षण्यप्रयोजकत्वादिति चेत्तदाह—केचित्त्वित्यादि । तथा च चन्द्राभिन्नं मुखमित्यभेदान्वयबोध एवेति न व्यभिचारो न वा चमत्कारवैलक्षण्यानुपपत्तिर्विषयवैलक्षण्यस्य सत्वात् । ननु बाधान्नाभेदश्चन्द्रादेर्मुखादाविति चेत्तदाह—अभेदभ्रमो मुखादाविति । ननु मुखन्न चन्द्र इति विशेषदर्शने न भ्रमस्यापि सम्भव इति चेत्तदाह—न तत्र शाब्दोऽभेदभ्रम इति । समानविभक्तिकमुख चन्द्रपदजन्योपस्थितिविषययोर्म्मुखचन्द्रयोर्म्मानसोऽभेद भ्रमः । मानसञ्च ज्ञानं विरोधिज्ञानाप्रतिबद्धमेवेति भावः । ननु मुखञ्चन्द्र इति वाक्यजन्यप्रतीतौ श्रुतोऽयमर्थश्चेतश्चमत्करोतीत्यनुभवः प्रामाणिकः । श्रुधातोश्च शाब्दबोध एवार्थस्तदनुरोधेन शाब्दाभेदप्रत्यय एव मुखञ्चन्द्र इति

परे तु[१] तादात्म्यातिरिक्तसम्बन्धेन नामार्थयोर्नान्वयबोधः। तादात्म्यं च प्रकृते तद्वृत्तिधर्मवत्त्वम्। एवं च नीलो घट इत्यादौ स्ववृत्तिनीलत्वादिमत्त्वसम्बन्धेन घटाद्यंशे नीलपदार्थस्यैव मुखं चंद्र इत्यादौ स्ववृत्त्याह्लादकत्वादिमत्त्वसम्बन्धेन मुखादौ चन्द्रादेरन्वयबोधः तादृशार्थान्वयबोधेऽपि समानविभक्तिकत्वं तन्त्रमित्यतो नातिप्रसङ्ग इति वदन्ति।

---

वाक्यादभ्युपेयो न मानस इत्यत आह—परे त्विति। नामार्थयोर्नान्वयबोध इति। एतदुत्तरं नामार्थयोरभेदान्वयबोध इत्यस्यार्थ इति शेषः। एवञ्च मुखञ्च चन्द्र इति विशेषदर्शनदशायामपि स्ववृत्त्याह्लादकत्ववत्वसम्बन्धेन चन्द्रविशिष्टं मुखमिति बोधोऽप्रतिबद्ध एवेति भावः। नातिप्रसङ्ग इति। नीलस्य घट इत्यादाविति शेषः। नन्वेवं चन्द्रो मुखं पद्मं मुखमित्यादौ स्ववृत्तिधर्म्मवत्त्वसम्बन्धेन चन्द्रपद्मादेर्म्मुखादावन्वयोपगमे प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमावित्यनुरोधेन न चन्द्रो न पद्मं मुखमेवेदमित्यादौ तत्सम्बन्धावच्छिन्नप्रतियोगिताकचन्द्राद्यभाव एव नञा प्रतीयेत स च बाधित इति तत्र बोधो न स्यादतोऽसम्मतोऽयं पक्षो भट्टाचार्य्यस्येति परे त्वित्यनेन सूचयति। स्वमते तु चन्द्रपदस्य चन्द्रसदृशे लक्षणैव। उपमातो रूपके चमत्कारवैलक्षण्यन्तु यथा गङ्गातीरे घोष इत्यतो न शैत्यपावनत्वातिशयप्रतीतिरपि तु गङ्गातीरलाक्षणिकगङ्गापदाद्गङ्गातीरबोधे एव शैत्यपावनत्वातिशयप्रतीतिस्तथैवात्रापि विषयावैलक्षण्येऽपि कारणान्तरगम्यमेवेति सहृदयमात्रगम्यमिति दिक्।

---

[१] परे त्विति—वस्तुतो न युक्तमिदमन्यथा घटवृत्तिद्रव्यत्वस्य घटेऽप्यबाधात् तेन सम्बन्धेन घटस्य पटेऽन्वयबलात् घटः पट इत्यपि प्रयोगापत्तिः। एवञ्च केचिदित्यादिमतमेव युक्तमिति गुरुचरणाः।

अथ राजा पुरुष इत्यादौ पदार्थोपस्थित्यादिसत्त्वेन कथन्न भेदान्वयबोधः, सामग्र्या कार्यजनने उक्तनियमभङ्गरूपायाः प्रयोजनक्षतेरकिंचित्करत्वात्, सामग्रीसत्त्वे अवश्यं कार्यमिति नियमात्। न च तत्र भेदान्वयबोधौपयिकाकाङ्क्षाविरहाच्छाब्दसामग्र्येवासिद्धेति वाच्यम्। समभिव्याहाररूपाकाङ्क्षायास्तत्रापि सत्त्वात्। न च तादृशाकाङ्क्षायास्तत्र सत्त्वेऽपि राजादिपदार्थप्रकारकभेदान्वयबोधे राजादिपदार्थप्रकारकराजादिपदाव्यवहितोत्तरङसूपदत्वादरूपानुपूर्वीविशेषरूपाया आकाङ्क्षाया अपि प्रयोजकत्वात्। तदभावादेव न तत्र शाब्दसामग्रीति वाच्यम्। सम्बन्धादिविशेष्यक-

---

नियममूलभूतं कार्य्यकारणभावं शङ्कासमाधानाभ्यामाह—अथ राजा पुरुष इत्यादाविति। ननु नामार्थयोरभेदान्वय एवेति नियमभङ्ग इति चेदाह—सामग्र्या कार्य्येत्यादि। नियमः प्रयोजनं क्षतिर्हानिः। अकिञ्चित्करत्वात् कार्याबाधकत्वादित्यर्थः। सामग्रीसत्त्वे इत्यादि। सामग्र्याः कार्य्याव्याप्यत्वादित्यर्थः। न च तत्र भेदान्वये बोधौपयिकाकाङ्क्षाविरहादिति। राजानं राजा राज्ञे राज्ञ इत्यादौ राजनिष्ठकर्म्मत्वराजनिष्ठकरणत्वाद्यत्याकारकभेदान्वये राजानमित्याद्यानुपूर्वीज्ञानाकारणत्वाद्राजा पुरुष इत्यादौ तादृशानुपूर्वीरूपाकाङ्क्षाविरहान्न शाब्दसामग्रीति भावः। समभिव्याहाररूपाकाङ्क्षाया इति। भेदान्वयबुद्धिं प्रत्यानुपूर्वीज्ञानानां परस्पराव्यभिचरितत्वे नानाकारणत्वात् प्रकारविशेष्यवाचकपदयोस्समभिव्याहाररूपाकाङ्क्षाज्ञानस्यैव कारणत्वेन तस्य च राजा पुरुष इत्यत्रापि सत्त्वादिति भावः। न च तादृशाकाङ्क्षायास्तत्र सत्त्वेऽपीति। राजा कर्मत्वं राजा स्वत्वमित्यादौ समभिव्याहाररूपाया आकाङ्क्षायास्सत्त्वेऽपि शाब्दबोधानुदयेन भेदान्वये आनुपूर्व्या अपि कारणत्वस्य वक्तव्यत्वेन राजपदाव्यवहितङस्पदत्वादिरूपानुपूर्वीरूपाकाङ्क्षाया अभावान्न शाब्दबोध इति भावः। सम्बन्धा-

राजादिप्रकारकान्वयबोध एव तादृशाकाङ्क्षाज्ञानस्य हेतुतया पुरुषादौ राजादिपदार्थप्रकारकान्वयबोधोत्पत्तौ तादृशाकाङ्क्षाज्ञानरूपकारणविरहस्याकिंचित्करत्वात् ।

अत्र केचित् नामार्थप्रकारकभेदान्वयबोधं प्रति समानविशेष्यताप्रत्यासत्त्या प्रत्ययजन्योपस्थितेर्हेतुत्वकल्पनात् नामार्थप्रकार-

---

दिविशेष्यकेत्यादि । आनुपुर्वीरूपाकाङ्क्षायाः कारणत्वस्यावश्यकत्वेऽपि भेदान्वयबुद्धित्वं न कार्य्यतावच्छेदकन्तथा सति कार्य्यतावच्छेदकस्यैक्याद्राजपदाव्यवहितोत्तरङसपदत्वराजपदाव्यवहितोत्तरामपदत्वादिरूपानुपूर्वीज्ञानानां नानात्वात्परस्परजन्यबोधे व्यभिचारप्रसक्त्या तद्वारणार्थं राजनिष्ठभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितस्वत्वनिष्ठविशेष्यताकशाब्दबोधं प्रति राजपदाव्यवहितोत्तरङसपदत्वरूपानुपूर्वीरूपाकाङ्क्षाज्ञानं कारणमित्येवं क्रमेणैव विशेष्यतावच्छेदकं कार्य्यतावच्छेदके निवेश्य तत्तदानुपूर्वीणां कारणत्वस्य वक्तव्यतया राजनिष्ठस्वत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितपुरुषनिष्ठविशेष्यताकशाब्दबोधं प्रति कस्यचिदानुपूर्वीज्ञानस्य कारणत्वाकल्पनात्तादृशबोधे आनुपूर्वीज्ञानविरहस्याकिञ्चित्करत्वादिति भावः ।

अत्र केचिदिति । राज्ञः राजानमित्यादौ निरूपितत्ववृत्तिसम्बन्धावच्छिन्नराजनिष्ठप्रकारतानिरूपितस्वत्वकर्म्मत्वादिनिष्ठविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति ङस्प्रत्ययजन्यस्वत्वोपस्थितिरम्प्रत्ययजन्यकर्म्मत्वोपस्थितिः कारणमित्यादिक्रमेण विशेष्यस्य कार्य्यकारणकोटौ निवेशेनात्मनिष्ठप्रत्यासत्त्या कार्य्यकारणभावस्वीकारे गौरवात् । लाघवेन विशेष्यतासम्बन्धेन नामार्थनिष्ठभेदसम्बन्धावच्छिन्नप्रकारताकशाब्दबोधं प्रति विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिः कारणमित्येव विषयनिष्ठप्रत्यासत्त्या कार्य्यकारणभावो वक्तव्यः । तथा च न राजा पुरुष इति वाक्यात् स्वत्वसम्बन्धावच्छिन्नराजनिष्ठप्रकारतानिरूपितपुरुषनिष्ठविशेष्यताकः शाब्दबोधः विशेष्यता-

कभेदान्वयबोधे विशेष्यतया प्रत्ययार्थस्यैव भानं न तु नामार्थान्तरस्य । तत्र विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेरसत्त्वात् । न च सम्बन्धादेरपि नामार्थतया तत्प्रकारकान्वयबोधे पुरुषादिपदार्थस्य विशेष्यतया भानानुपपत्तिः, तत्तन्नामपदजन्यतत्तन्नामार्थप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति प्रत्ययजन्योपस्थितित्वेन हेतुत्वेऽपि राजसम्बन्धः प्रमेयः राज्ञः पुरुष इत्येतादृशवाक्यद्वयजन्यवाक्यार्थद्वयान्वयबोधे पुरुषस्य राजसम्बन्धविशेष्यतया भानानुपपत्तिरिति वाच्यम् । प्रत्ययाधीनतत्तत्पदार्थोपस्थित्यजन्यतत्तत्पदार्थप्रकारकशाब्दत्वावच्छिन्नं प्रत्येव प्रत्ययजन्योपस्थितेः समानविशेष्यताप्र-

---

सम्बन्धेन पुरुषे प्रत्ययजन्योपस्थितेरभावात् । न च सम्बन्धादेरपीति । अयम्भावः । राज्ञः पुरुष इत्यादौ राजनिरूपितस्वत्वप्रकारकपुरुषविशेष्यकशाब्दबोधो न स्यात् । स्वत्वस्यापि सम्बन्धरूपनामार्थत्वं ततश्च तन्निष्ठस्वरूपसम्बन्धावच्छिन्नप्रकारताको विशेष्यतासम्बन्धेन पुरुषे शाब्दबोधो न स्यात्तत्र विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेरभावादिति । तत्तन्नामपदजन्येत्यादि । यन्नामार्थनिष्ठप्रकारताकः शाब्दबोधस्तन्नामपदजन्यस्य शाब्दबोधोऽपेक्षितः । प्रकृते सम्बन्धरूपनामार्थस्वत्वनिष्ठप्रकारताकत्वेऽपि सम्बन्धरूपनामपदजन्यत्वाभावान्न तत्र बोधे विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेरपेक्षा । राजसम्बन्धः प्रमेयः राज्ञः पुरुष इत्येतादृशवाक्यद्वयजन्येति—अयं यः समूहालम्बनात्मको वाक्यद्वयजन्यो बोधः सम्बन्धपदजन्यः सम्बन्धपदार्थस्वत्वप्रकारकश्चेति तत्र बोधे विशेष्यतया पुरुषस्य भानं न स्यात्तत्र प्रत्ययपदजन्योपस्थितेरभावात् । प्रत्ययाधीनेति । तन्नामपदजन्यत्वं न देयं किन्तु प्रत्ययाधीनतदर्थोपस्थित्यजन्यो यस्तन्नामार्थप्रकारकः शाब्दबोधो विशेष्यतासम्बन्धेन तदुत्पत्तौ विशेष्यतासम्बन्धेन प्रत्ययपदजन्योपस्थितिः कारणमुक्तसमूहालम्बनबोधस्य सम्बन्धरूपनामार्थस्वत्वनिष्ठप्रकारताकत्वेऽपि इत्-

त्यासत्त्या हेतुत्वोपगमात् । अथैवमपि यत्र राजा पुरुष इत्यत्र पुरुषपदाधीनपुरुषोपस्थितौ प्रत्ययवशात्कश्चित्प्रत्ययार्थोऽपि विषयीभूतः तत्र प्रत्ययजन्यतथाविधसमूहालम्बनोपस्थितेर्विशेष्यतासम्बन्धेन पुरुषेऽपि सत्त्वात्तस्य राजप्रकारकान्वयबोधे विशेष्यतया भानापत्तिर्दुर्वारैव । न च प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासम्बन्धेनोपस्थितेर्हेतुत्वोपगमान्नानुपपत्तिः । तादृशसमूहालम्बनोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यताया नाम्न एव जन्यतावच्छेदकत्वादिति वाच्यम् । ज्ञानभेदेन विशेष्यताभेदे मानाभावात् । एवं च यत्र

---

प्रत्ययाधीनस्वत्वोपस्थितिजन्यत्वस्यैव सत्त्वेन कार्य्यतावच्छेदकानाक्रान्तत्वान्न तत्र पुरुषभानानुपपत्तिः ।

कार्य्यतावच्छेदकं विचार्य्य कारणकोटिं विचारयति—अथैवमपीति । पुरुषेऽपि यत्र प्रत्ययजन्योपस्थितिविशेष्यतासम्बन्धेन वर्त्तते तत्र राजा पुरुष इति वाक्यात् पुरुषे भेदान्वयापत्तिः । पुरुषपदजन्यपुरुषोपस्थितौ प्रत्ययस्य कस्यचिच्छ्रवणात्प्रत्ययार्थोऽपि विषयीभूतस्तादृशसमूहालम्बनोपस्थितिर्य्यथा पुरुषपदे जन्या तथा प्रत्ययपदजन्याऽपि तस्याश्च विशेष्यतासम्बन्धेन पुरुषे सत्त्वात् । यद्यपि समूहालम्बनात्मिका योपस्थितिस्तस्यां प्रत्ययपदजन्यत्वं पुरुषपदजन्यत्वञ्च तथापि प्रत्ययपदजन्यतावच्छेदिका प्रत्ययार्थनिष्ठविषयतैव पुरुषपदजन्यतावच्छेदिका च पुरुषनिष्ठविषयतैव कारणतावच्छेदकसम्बन्धश्च न विशेष्यतामात्रमपि तु प्रत्ययपदजन्यतावच्छेदकीभूतविशेष्यता । एवञ्च प्रत्ययपदजन्यतावच्छेदकविशेष्यतासम्बन्धेन प्रत्ययपदजन्या सा समूहालम्बनोपस्थितिः प्रत्ययार्थे एव न पुरुषार्थे इति न तत्र राजभेदान्वय इति भावः । नाम्न एव जन्यतावच्छेदकत्वादिति । समूहालम्बनोपस्थितीयपुरुषनिष्ठविषयतायाः पुरुषपदजन्यतावच्छेदकत्वमित्यर्थः । पुनरप्यापत्तिं स्थापयति—ज्ञानभेदेन विशेष्यताभेद इति । अयं भावः—

कुत्रचित्प्रत्ययादेव लक्षणादिना पुरुषाद्युपस्थितिस्तत्र तादृशोपस्थितिनिरूपितप्रत्ययजन्यतावच्छेदकीभूतविशेष्यतातः पुरुषादिपदजन्यपुरुषाद्युपस्थितिविशेष्यताया अभिन्नतया तावताप्युक्तातिप्रसङ्गवारणासम्भवादिति चेत्-न। स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासंबन्धेनैवोपस्थितेर्हेतुतयोक्तसमूहालम्बनोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यतायाश्च तादृशोपस्थितिजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यतासामानाधिकरण्यविरहान्नातिप्रसङ्ग इति वदन्ति।

तदसत्। प्रत्ययत्वस्यानुगतानतिप्रसक्तस्य दुर्वचतया उक्तकार्य-

---

कुत्रचित् लक्षणादिना प्रत्ययादेव पुरुषत्वावच्छिन्नोपस्थितिस्तत्र प्रत्ययपदजन्यतावच्छेदकीभूता पुरुषत्वावच्छिन्ना विशेष्यता सा निरुक्तसमूहालम्बनोपस्थितीयपुरुषत्वावच्छिन्ना विशेष्यताऽवच्छेदकैक्यादेकैव तन्निरूपकोपस्थित्योर्भेदेऽपि विषयताभेदे मानाभावात्। ततश्च प्रत्ययपदजन्यतावच्छेदकीभूता पुरुषत्वावच्छिन्ना तेन सम्बन्धेन प्रत्ययपदजन्यनिरुक्तसमूहालम्बनोपस्थितेः पुरुषे सत्त्वाद्राजभेदान्वयापत्तिः। आपत्तिमपाकरोति-स्वजनकज्ञानीयेत्यादिना। स्वं समूहालम्बनोपस्थितिस्तज्जनकं वृत्तिज्ञानं वाच्यत्वसम्बन्धेन पुरुषः पुरुषपदवानिति ज्ञानं प्रत्ययार्थः। वाच्यत्वसम्बन्धेन प्रत्ययवानित्थाकारकञ्च तज्ज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यता प्रत्ययार्थनिष्ठा तद्वैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन पुरुषनिष्ठविशेष्यतायामभावात्। स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासम्बन्धेन पुरुषे प्रत्ययजन्योपस्थितिर्नास्तीति न पुरुषे राजान्वय इति बोध्यम्। प्रत्ययत्वस्यानुगतानतिप्रसक्तस्येति। इदमग्रे स्पष्टम्। न च प्रत्ययत्वस्यानुगतानतिप्रसक्तस्य ज्ञातुमशक्यत्वेऽपि वस्तुतो या प्रत्ययवृत्तिप्रकारता तन्निरू-

कारणाभावकल्पनाया असम्भवात्। राजसम्बन्धः[१] पुरुष इत्यादौ सम्बन्धादिपदे ङसूपदत्वादिभ्रमदशायां सम्बन्धादिविशेष्यकराजादिपदार्थप्रकारकान्वयबोधानुपपत्तेः। राज्ञः पुरुष इत्यादौ ङसूपदादिषु सम्बन्धादिपदत्वभ्रमदशायां सम्बन्धांशे राजादिपदार्थप्रकारकान्वयबोधापत्तेश्च। न च प्रत्ययत्वेन ज्ञातं यत्पदं तत्पदजन्योपस्थितेः कारणत्वादेतद्दोषद्वयस्य नावकाश इति वाच्यम्। राज्ञः पुरुष इत्यादौ षष्ठ्यादेः प्रत्ययत्वाद्यनुपस्थितिद-

---

पितविशेष्यतासम्बन्धंनेत्येवमुच्यमाने दोषमाह—राजसम्बन्धः पुरुष इत्यादि। सम्बन्धपदे ङस्त्वभ्रमेऽपि तद्वृत्तिप्रकारतायां प्रत्ययवृत्तित्वविरहात्। ङसूपदादिषु सम्बन्धादिपदत्वभ्रमदशायामिति। तत्र वस्तुतः प्रत्ययवृत्तिप्रकारतायास्सत्त्वादिति भावः।

न च प्रत्ययत्वेन ज्ञातमिति। सम्बन्धपदे प्रत्ययत्वेन ज्ञाते तद्वृत्तिप्रकारतायाः प्रत्ययत्वेन ज्ञातवृत्तित्वात्। ङसूपदे सम्बन्धत्वेन ज्ञातेऽपि तद्वृत्तिप्रकारतायाः प्रत्ययत्वेन न ज्ञातवृत्तित्वाविरहादुक्तदोषद्वयाभाव इति बोध्यम्। प्रत्ययत्वाद्यनुपस्थितिदशायामिति। ङसादौ प्रत्ययत्वाज्ञानदशायामपि शाब्दबोधकस्येष्टस्य न स्यादिति बोध्यम्। न च प्रत्ययत्वव्याप्यधर्मेण

---

[१] राजसम्बन्ध इत्यादि। इदञ्चाभ्युपेत्योच्यते प्रत्ययत्वस्यानुगमेऽपि इदं दूषणद्वयं दुरुद्धरमेवेति भावः। वस्तुत इदंतुच्छमनुगतं भवेत् प्रत्ययत्वम्। वस्तुतो यः प्रत्ययः तद्वृत्तिर्या आनुपूर्वी तत्प्रकारेण ज्ञातं यत्तज्जन्योपस्थिते कारणत्वकल्पने यत्र तु सपदस्यैव सम्बन्धपदत्वेन ज्ञानं तत्र प्रत्ययवृत्त्यानुपूर्वीप्रकारेण ज्ञानाभावात्। यत्र च सम्बन्धपदस्य ङस्त्वेन ज्ञानन्तत्र तेन रूपेण ज्ञानात्। अतिव्याप्त्यव्याप्त्योरभावात् प्रत्ययत्वेन ज्ञानस्य चानुपयोगात्। तस्मादननुगतत्वमेव दोषो युक्त इति।

शायामपि आनुपूर्वीविशेषप्रकारकज्ञानाधीनतदर्थोपस्थितिसत्त्वे शाब्दबोधोत्पत्त्या प्रत्ययत्वप्रकारकज्ञाननिवेशासंभवात्।

इदं पुनरत्र तत्त्वम्। राजा पुरुष इत्यादौ पुरुषादिविशेष्यकराजादिप्रकारकभेदान्वयबोधस्याऽप्रसिद्ध्यैव नापत्तिसंभवः। यत्र षष्ठ्यादिविभक्तेरेव स्वारसिकलक्षणया शक्तिभ्रमेण वा पुरुषाद्युपस्थितिस्तत्र तद्विशेष्यकराजादिपदार्थप्रकारकभेदान्वयबोधः प्रसिद्ध एवेति चेत्तर्हि तादृशबोधे तथाविधप्रकृतिप्रत्ययानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानसहकृततत्तद्विभक्तिजन्यपुरुषाद्युपस्थितिघटितसामग्र्य एव तादृशबोधोत्पत्तिनियामकतया तदभावादेव न तदापत्तिः। अत एव स्वत्वादिसम्बन्धेन राजादिविशिष्टपुरुषादितात्पर्यकतदादिपदघटितात् स सुन्दर इत्यादि वाक्यात्पुरुषादिविशेष्यकस्वत्वादिसंसर्गकराजादिप्रकारकशाब्दबोधस्य च प्रसिद्ध्या राजा पुरुषः सुन्दर इत्यादौ पदार्थोपस्थितियोग्यताज्ञानादिबलात्तादृशशाब्दबोधापत्तिरित्यपि निरस्तम्। स सुन्दर इत्यादिवाक्याधीनशाब्दबोधसामग्र्यास्तत्पदत्वाद्यवच्छिन्नविशेष्यकसुन्दरादिपदसमभिव्याहारज्ञानसहकृततदादिपदजन्यतादृशविशिष्टार्थोपस्थितियोग्यताज्ञानादिघटिततया तदभावादेवापत्त्यभावात्॥ अथैतादृशरीत्यापत्तिवारणे राज्ञः पुरुष इत्यादौ स्वत्वादिसम्बन्धेन पुरुषादौ

---

ज्ञात इत्युक्तौ न दोष इति वाच्यम्। ङस्त्वाद्यानुपूर्वीतितद्व्यक्तित्वप्रकारेण ज्ञातेऽपि शाब्दबोधापत्तेः प्रत्ययत्वव्याप्यत्वयोरज्ञाने शाब्दबोधानापत्तेश्च[1]।

---

[1] इत्थं काशीविश्वेश्वरसायुज्यलाभादेकादशदिनपूर्वं यावत् विरचयन्त एव सन्निपातज्वराभिभूताः पितृचरणाः फाल्गुनकृष्णदशम्यां चन्द्रे नेत्रवसुरत्नभूमिते ( १९८२ ) वैक्रमाब्देऽत्रैव निवृत्ताः।

राजाद्यन्वयबोधस्वीकारेऽपि क्षतिविरहादुक्तव्युत्पत्तिर्निर्युक्तिका । विभक्तीनां सम्बन्धादिवाचकत्वमपि निर्युक्तिकम् । नीलो घट इत्यादौ विशेषणवाचकपदसमभिव्याहृतविभक्तेरिव सर्वविभक्तीनां साधुत्वमात्रार्थकत्वस्यैवोचितत्वात् । न हि तत्र तथाविधान्वयबोधोपगमे तत्स्थलीयसामग्रीबलाद्राजा पुरुष इत्यादिष्वपि तथाविधान्वयबोधप्रसङ्गः संभवति । तत्स्थलीयसामग्र्याः षष्ठ्यन्तराजपदत्वाद्यवच्छिन्नधर्मिकपुरुषादिपदसमभिव्याहाररूपाकाङ्क्षाज्ञानघटिततया तदभावादेव तत्र तादृशसामग्र्या अभावात् । एवं च राजपुरुष इत्यादिसमासे राजादिपदस्य राजसम्बन्ध्यादौ लक्षणास्वीकारोऽपि व्यर्थः । तत्र भेदान्वयबोधस्वीकारेऽपि क्षतिविरहात् । न च तत्र भेदान्वयबोधाभ्युपगमे तत्स्थलीयसामग्रीबलाद्राजा पुरुष इत्यादावपि तादृशान्वयबोधापत्तिरिति वाच्यम् । तत्स्थलीयशाब्दबोधे राजादिपदाव्यवहितोत्तरपुरुषादिपदत्वरूपानुपूर्वीविशेषज्ञानस्य हेतुतयाऽसमासस्थले पुरुषादिपदस्य विभक्त्या राजादिपदव्यवहितत्वात्तादृशानुपूर्वीविशेषज्ञानासंभवेन तत्र तादृशबोधसामग्र्या अप्रसिद्धेः । न च प्रकृतिप्रत्यययोरानुपूर्वीविशेषरूपस्याकाङ्क्षात्वात्प्रातिपदिकद्वयाव्यवधानघटितोक्तानुपूर्वीविशेषज्ञानस्य हेतुत्वमेव निष्प्रामाणिकमिति वाच्यम् ।

भवन्मतेऽपि राजपुरुष इत्यादौ यादृशसामग्रीबलाद्राजपदार्थराजसम्बन्धिपुरुषपदार्थयोरभेदान्वयबोधस्तादृशसामग्रीबलाद्राज्ञः पुरुषः इत्यादावपि राजादिपदस्य राजसम्बन्ध्यादौ लक्षणाग्रहसत्त्वे तादृशाभेदान्वयबोधप्रसङ्गवारणाय तथाविधानुपूर्वीविशेषज्ञानस्य समासजन्यबोधे हेतुताकल्पनस्यावश्यकत्वात् ।

अस्माभिर्भेदान्वयबोध एव तादृशानुपूर्वीविशेषज्ञानस्य हेतुतायाः कल्पनीयत्वात् । न चोभयमत एव राजसम्बन्धिनि राजपदस्य स्वारसिकलक्षणाग्रहेण राजपुरुष इत्यत्र राजसम्बन्धिपुरुष-

योरभेदान्वयबोधो भवति। इयांस्तु विशेषो यदस्मन्मतेऽसौ समासः षष्ठीतत्पुरुषो[1] भवन्मते कर्मधारय[2] इति। एवं च पुरुषविशेष्यकाभेदसंसर्गकराजसम्बन्धिप्रकारकबोधे राजपदाऽव्यवहितोत्तरवर्त्तिपुरुषपदत्वप्रकारकज्ञानत्वेन हेतुत्वमुभयवादिसिद्धमेव। भेदान्वयबोधे तादृशानुपूर्वीज्ञानहेतुताकल्पनमधिकमिति वाच्यम्। उक्ताभेदान्वयबोधे तथाविधानुपूर्वीज्ञानहेतुतायां पर्यायशब्दान्तर्घटितानुपूर्वीज्ञानजन्यतथाविधाभेदान्वयबोधे व्यभिचारवारणाय तादृशानुपूर्वीज्ञानानन्तर्यस्य कार्यतावच्छेदककोटावश्यं निवेशनीयतया तत्र[3] विषयनिवेशे प्रयोजनाभावेन तादृशकार्यतावच्छेद-

---

उक्ताभेदान्वयबोधे तथाविधानुपूर्वीज्ञानहेतुतायां पर्य्यायशब्देत्यादीति। ननु विषयमनिवेश्य राजपुरुष इत्याद्याकांक्षाज्ञानाव्यवहितोत्तरजायमानशाब्दत्वावच्छिन्नं प्रति राजपुरुष इत्याद्याकांक्षाज्ञानस्य कारणत्वोपगमे राज्ञः पुरुष इत्यादौ राजपदस्य राजसम्बन्धिनि स्वारसिकलक्षणाग्रहदशायामभेदसम्बन्धावच्छिन्नराजसम्बन्धित्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकस्य राजपुरुष इत्यादौ प्रसिद्धस्य तात्पर्य्यज्ञानादिघटितसामग्रीबलादापादने तद्धर्मावच्छिन्नकार्य्यानुत्पादकस्य राजपदाऽव्यवहितोत्तरत्वविशिष्टपुरुषपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरजायमानशाब्दत्वावच्छिन्नकार्य्यं प्रति कारणस्य राजपुरुष इत्याकारकाकाङ्क्षाज्ञानस्य विरहोऽकिञ्चित्कर इति तात्पर्य्यज्ञानोपस्थित्यादिघटितसामग्रीबलात्तादृशकार्य्यापत्तिर्दुर्वारा। न च तादृशकार्य्यं प्रति राजपुरुष इत्याकारकाकाङ्क्षाज्ञानोत्तरशाब्दत्वा-

---

[1] षष्ठ्यर्थविशिष्टार्थलाक्षणिकपूर्वपदकसमासत्वमेव तत्त्वमिति भावः।

[2] विभिन्नधर्म्मेण एकधर्म्मिबोधकपदघटितसमासत्वमेव तत्त्वमिति भावः।

[3] तत्रेति—भेदविषयकत्वाभेदविषयकत्वनिवेशे शाब्दबोध इति भावः।

कस्यैव भेदान्वयबोधसाधारण्येनानुपूर्वीज्ञानस्य भेदान्वयबोधे हेतुतायामनाधिक्यात्। एवं तण्डुलं पचतीत्यादावपि पाकादिरूपधात्वर्थे कर्मत्वादिसम्बन्धेन तण्डुलादेरन्वयबोधः स्वीकर्तुमुचितः। कर्मत्वस्य पाकाद्यंशे प्रकारत्वे तत्र तत्र द्वितीयादेः शक्तिकल्पने तादृशवाक्यजन्यशाब्दबोधे कर्मत्वादिसंसर्गस्याधिकस्य विषयताकल्पने च गौरवात्। तण्डुलं पचतीत्यादिवाक्यजन्यशाब्दबोधसामग्रीबलात्तण्डुलः पचतीत्यादावपि तथाविधान्वयबोधापत्तिस्तु न संभवति। तादृशान्वयबोधे द्वितीयान्ततण्डुलपदत्वाद्यवच्छिन्नधर्मिकपचतीत्यादिसमभिव्याहारज्ञानस्य हेतुतया तण्डुलः पचतीत्यादौ तादृशसामग्र्या अप्रसिद्धेः। एवं पचति चैत्र इत्यादावपि कृतिसम्बन्धेन पाकादेश्चैत्राद्यंशेऽन्वयबोधस्वीकार उचितः अन्यथोक्तरीत्या गौरवात्। तत्र तादृशान्वयबोधस्वीकारे तत्स्थलीयसामग्रीबलात् पच्यते चैत्रः पाकश्चैत्र इत्यादौ तथाविधान्वयबोधापत्तेरप्युक्तरीत्या वारणसंभवादिति।

मैवम्। राज्ञः पुरुष इत्यादौ षष्ठ्यादेः स्वत्वादिवाचकत्वमावश्यकम्। अन्यथा पुरुषो न राज्ञ इत्यादौ पुरुषे राजस्वत्वाद्यभावबोधानुपपत्तेः। न हि तत्र स्वत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकराजा-

---

वच्छिन्नस्य कार्य्यस्य व्यापकता येन व्यापकसामग्रीविधया राजपुरुष इत्याकाङ्क्षाज्ञानस्यापेक्षा तदापादने स्यात्। नृपपुरुष इत्यादावपि तादृशशाब्दबोधस्य सत्त्वात् इति चेत्-उच्यते। यादृशान्यतमसमनैयत्यं यस्य कार्य्यस्य तादृशकार्य्योत्पत्तौ तादृशान्यतमस्य सामग्री अपेक्ष्यते। प्रकृते च राजपुरुषः नृपपुरुष इत्याद्याकाङ्क्षाघटितप्रदर्शितकार्य्यान्यतमसमनैयत्यस्यापाद्यमानकार्य्ये सत्त्वात्तदुत्पत्तौ तदन्यतमस्य राजपुरुष इत्याद्याकाङ्क्षान्यतमस्यापेक्षणात्तद्विरहान्नापत्तिरिति बोध्यम्। अत्रेदं बोध्यं—विषयनिवेशो युक्तः।

द्यभाव एव प्रतीयते न तु राजस्वत्वाद्यभाव इति संभवति। स्वत्वादि-संबन्धस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः। अत एव स्वामित्वादिकं परित्यज्य स्वत्वादेः षष्ठ्यर्थत्वं नवीनाः स्वीकुर्वन्ति। स्वामित्वादेः षष्ठ्यर्थत्वे तस्य निरूपकतासम्बन्धेन धनांशेऽन्वयसम्भवेऽपि तादृशसम्बन्धस्य वृत्त्यनियामकतया संसर्गाभावप्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नाभावस्य नञा प्रत्यायनासम्भवात्। आश्रयतासंबन्धाद्यवच्छिन्नाभावबोधस्यैतादृशसमभिव्याहारस्थलेऽभ्युपगमे चैत्रादिसंबन्धिनि धनेऽपि आश्रयतासंबन्धावच्छिन्नप्रतियोगिताकचैत्रवृत्तिस्वामित्वाभावसत्त्वान्नेदं चैत्रस्येति प्रयोगापत्तिः। न च नञ्समभिव्याहारस्थलान्वयबोधानुरोधेन षष्ठ्यादेः स्वत्वादिवाचकत्वेऽपि राज्ञः पुरुष इत्यादौ षष्ठ्याद्यर्थस्य संसर्गमर्यादया भानमुचितम्। तस्य प्रकारत्वोपगमे तत्सम्बन्धस्याधिकस्य भानकल्पने गौरवात्। नञ्समभिव्याहारस्यैव तत्प्रकारकबोधनियामकत्वाभ्युपगमेन सामग्रीबलात् तत्प्रकारकबोधस्य तदसमभिव्याहारस्थलेऽ-

---

तृणारणिमणिन्यायस्थले परस्परव्यभिचारवारणायाव्यवहितोत्तरत्वनिवेशे तृणाव्यवहितोत्तरवह्नित्वापेक्षया लाघवात्तृणाव्यवहितोत्तरप्रमेयत्वतदव्यवहितोत्तरत्वादेः, कार्य्यतावच्छेदकत्ववारणाय विशेषधर्म्मावच्छिन्नं प्रति कारणत्वसम्भवे सामान्यधर्म्मावच्छिन्नं प्रत्यन्यथासिद्धत्वमवश्यं वक्तव्यम्। एवं स्थिते अभेदसम्बन्धावच्छिन्नराजसम्बन्धित्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकबुद्धित्वावच्छिन्नस्वे कार्य्यत्वे सम्भवति प्रदर्शितसामान्यधर्म्मावच्छिन्नं प्रत्यन्यथासिद्धत्वमिति स्यात्। तस्मादेतद्ग्रन्थ एतदपर्य्यालोचनयैव बोद्धव्यः।

संभवादिति वाच्यम्। एवं सति नञ्पदं विना यादृशसमभिव्याहारस्थले यत्र धर्मिणि येन सम्बन्धेन यस्य विशेषणतया भानं तत्र नञ्समभिव्याहारस्थले तद्धर्मिणि तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावः प्रतीयते इति सर्वजनसिद्धानुभवस्यापलापापत्तेः। एवं

---

सर्वजनसिद्धानुभवस्यापलापापत्तेरिति। वस्तुतोऽत्र नैतत् व्युत्पत्तिविषयता अन्यथा भूतले घट इत्यत्र घटे भूतलवृत्तित्ववता प्रतीयते। नञ-

---

प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमावित्यनुभवार्थं प्रकाशयति—नञ्पदं विनेत्यादिना। अस्य फलन्तु पचत्यपि चैत्रे न याचतीति प्रयोगवारणम्। अन्यथा समवायसम्बन्धेन पाकानुकूलकृतिमत्यपि चैत्रे संयोगेन पाकानुकूलकृत्यभावबोधनं सम्भवेत्। नन्वेवं भूतले घट इत्यादौ भूतलनिरूपितवृत्तित्ववान् घट इत्यर्थात् नञ्पदं विना एतादृशसमभिव्याहारस्थले घटरूपधर्मिणि स्वरूपसम्बन्धेन न वृत्तिताया विशेषणता तत्र नञ्समभिव्याहारे स्वरूपसम्बन्धावच्छिन्नवृत्तित्वावच्छिन्नाभाव एव प्रतीयतां घटे कथं घटाभावो भूतलवृत्तिरिति प्रतीयते इति चेत्सत्यम्। नञ्समभिव्याहारे यद्धर्म्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वं सम्भवति तस्य नञ्समभिव्याहारे नञर्थाभावनिष्ठविशेष्यतानिरूपितप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन यदि सञ्जिघृक्षितः तदा तत्सम्बन्धावच्छिन्नतद्धर्म्मावच्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्नप्रकारताप्रयोजक एव भवतीत्यर्थः। अत एव घटो न घट इत्यादौ शब्दानुमितिवारणार्थंयत्नः सार्थकः। एवञ्च भूतलवृत्तिता न तादृशप्रकारताप्रयोजकत्वेनाभिमता यदि चेदभिमता तदा नियमविषयता स्यात्। इत्थं सति प्रकृते यदि राजप्रतियोगिताकोऽभावो बुबोधयिषितश्चेत्तदा नियमस्य विषयः स्यात्। बुबोधयिषितश्च राजस्वत्वप्रतियोगिताकाभाव इत्येवं नियमाविषये को दोष इत्यरुचेराह-

राज्ञः पुरुष इत्यादिवाक्यजन्याप्रामाण्यज्ञानानास्कन्दितबोधदशायां

---

समभिव्याहारे च नञर्थाभावे घटस्य प्रतियोगितयान्वयः । भूतलवृत्तित्वस्य चाश्रयतया अन्वयस्तथा च घटाभावो भूतलवृत्तिरिति प्रतीयते । एवं घटो न घट इत्यत्र घटत्वावच्छेदेन घटत्वावच्छिन्नप्रतियोगिताकाभावप्रकारकानुमितिशाब्दयोर्वारणाय कारणान्तरं न कल्पनीयमिति फलत्वेनोपन्यस्तम् । तत्रापि नञोऽसमभिव्याहारे घटत्वावच्छेदेन तादात्म्येन घटवत्ताप्रतीतेरभावात्तदवच्छेदेन तदभावस्य नञा प्रत्याययितुमशक्यतया तादृशानुमितिशाब्दयोरप्रसङ्गात्तदुक्तिश्चासङ्गतैव स्यात् । तस्मात् यत्र धर्म्मे यत्सम्बन्धावच्छिन्नयद्धर्म्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दत्वावच्छिन्नं प्रति साकाङ्क्षं यद्वाक्यं तेन वाक्येन नञ्घटितेन तद्धर्म्मावच्छिन्ने तद्धर्म्मावच्छिन्नप्रतियोगिताकाभावश्चेद्बोधनीयस्तदा तत्सम्बन्धावच्छिन्नप्रतियोगिताक एवाभावो बोध्यते। इत्येव प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमावित्यस्यार्थः। प्रतियोगितायां तद्धर्म्मावच्छिन्नत्वन्तु अभावावगाहिबोधस्य विशिष्टवैशिष्ट्यावगाहित्वेन लभ्यते । तथा च घटो न घट इत्यादौ तादृशबोधो न भवति तद्धर्मभेदस्य कारणत्वात् । परं तादृशबोधं प्रत्याकाङ्क्षाऽस्त्येवेति न दोषः । भूतले न घट इत्यत्र घटत्वावच्छेदेनाभावो बोधनीय एव नास्तीति न दोषः । एवं प्रकृतेऽपि यदि पुरुषत्वावच्छेदेन राजत्वावच्छिन्नाभावबोधश्चेदभिप्रेतस्तदैवानेन नियमेन स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वमभावस्य स्यात्तदेव नेति इत एवारुचेराह—अप्रामाण्यज्ञानेत्यादि ।

---

राज्ञः पुरुष इत्यादीति । अप्रामाण्यज्ञानानास्कन्दितराजत्वावच्छिन्नस्वत्वसंसर्गावच्छिन्नप्रकारताकपुरुषत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति अप्रामाण्यज्ञानानास्कन्दितराजत्वावच्छिन्नस्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाभावीयविशेषणतासम्बन्धावच्छिन्नाभावनिष्ठप्रका-

पुरुषो न राज्ञ इत्यादिवाक्यादपि शाब्दबोधापत्तेः स्वत्वाभावबुद्धौ

---

तेन सम्बन्धेन तद्वत्ताबुद्धिं प्रति तेन सम्बन्धेन तदभाववत्ताबुद्धिरेव प्रतिबन्धिका न तु तत्प्रतियोगिकतत्सम्बन्धाभाववत्तापीति तदभावव्याप्यवत्तामुद्रया च तत्र तदभावव्याप्यत्वनिश्चये एव प्रतिबन्धकता। यस्य च व्याप्यत्वनिश्चयो नास्ति तस्य च भवत्येव ज्ञानद्वयम्। इति राजस्वत्वाभावे स्वत्वेन राजाभावव्याप्यत्वनिश्चयाभावेऽपि राज्ञः पुरुष इत्यतो ज्ञानदशायां राज्ञो न पुरुष इति वाक्याद्बोधो नेष्यते। स च स्यादिति भावः।

---

रतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकबुद्धित्वेनैव प्रतिबन्धकता भवितुमर्हति। न तु तादृशबुद्धित्वावच्छिन्नं प्रति स्वरूपसंसर्गावच्छिन्नराजस्वत्वत्वावच्छिन्नप्रतियोगिताकाभावीयविशेषणतासम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताबुद्धित्वेन प्रतिबन्धकता भवति मानाभावात्।

ननु पुरुषो न राज्ञ इत्यादावपि स्वत्वादिसंसर्गावच्छिन्नाभावस्यैव प्रतीत्या प्रतिबन्धकता भवतु भवदभिलषिता इति चेत् वृत्तिनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वाभ्युपगमे वृत्त्यनियामकश्चाधारतानवच्छेदक इति यावत्। राज्ञः पुरुष इत्येतद्वाक्यजन्यशाब्दसामग्रीसमये राजस्वत्वाभाववान् पुरुषः सुन्दर इत्याकारकविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षः प्राप्तः। नहि राजस्वत्वाभाववान् पुरुषत्वप्रकारकनिश्चयस्य तादृशसामग्रीबाधनिश्चयत्वं तस्य बाधाभावात्। एवञ्च विशेष्यतावच्छेदकादिप्रकारकनिश्चयादिकारणकलापात् प्राप्ततादृशप्रत्यक्षत्वावच्छिन्नं प्रति राज्ञः पुरुष इत्येतादृशशाब्दसामग्र्याः प्रतिबन्धकताकल्पनेन भवतां गौरवम्। न च प्रकारतावादिमते तादृशप्रतिबन्धकताप्रयोजनं तस्य राजस्वत्ववान् पुरुष इत्येतदर्थकराज्ञः पुरुष इत्येतादृशशाब्दसामग्रीकाले राजस्वत्वाभाववान्

स्वत्वसंसर्गकज्ञानस्य विरोधित्वे मानाभावात्। किञ्च वृत्त्यनियाम-

---

वृत्त्यनियामकसम्बन्धस्याभावीयप्रतियोगितानवच्छेदकत्वादिति। अय-मभावः। स्वत्वनिरूपकत्वादिनानासम्बन्धावच्छिन्नप्रतियोगिकाभावकल्पनायां गौरवमिति। न च स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावकल्पनायां भवता-मपि सत्त्वेनोभयोः साम्यमिति वाच्यम्। राजनिरूपितस्वत्वन्नास्तीत्यादौ स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकराजनिरूपितस्वत्वाभावकल्पनाया भव-तामप्यावश्यकत्वेन तदंशे साम्येन निरूपकत्वस्वत्वादिसम्बन्धावच्छिन्नाभाव-कल्पना भवतामधिकेति न वृत्त्यनियामकस्य प्रतियोगितावच्छेदकत्वमिति।

यद्यपि स्वत्वसम्बन्धेन राजाभावस्य स्वरूपसम्बन्धेन राजनिरूपित-स्वत्वाभावस्य चैकदेशवृत्तितयाऽतिरिक्तपदार्थानिवेशान्न गौरवं समनियत-वस्तुन ऐक्यात् तथाऽपि तत्सम्बन्धावच्छिन्नप्रतियोगिताकल्पनायां गौरवस्य तदवस्थत्वात् तत्कल्पनया निःफलत्वाच्च। किञ्च येनसम्बन्धेन यद्वत्ताबुद्धिः यत्र प्रवृत्तिप्रयोजिका भवति तत्सम्बन्धावच्छिन्नावच्छिन्नप्रतियोगिताकतद-भावस्य तदप्रवृत्त्युपयोगितया कल्पनमावश्यकं भवति। स्वत्वादिसम्बन्धेन तद्वत्ताबुद्धिस्तु न तत्र तत्प्रवृत्तिप्रयोजिकेति। तत्सम्बन्धेन तदभावस्य तत्र तद-प्रवृत्त्यनुपयोगितया तत्कल्पनन्नावश्यकमिति बोध्यम्।

ननु वृत्त्यनियामकस्य प्रतियोगितानवच्छेदकत्वे अणुपरिमाणान्न घटः गुणान्न गच्छतीत्यादौ निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकाणुपरिमाणा-भाववज्जन्यत्ववान् घट इति वृत्तित्वसम्बन्धाप्रतियोगिताकगुणाभाववत्सं-

---

पुरुषत्वादिविशेष्यतावच्छेदकनिश्चयाभावेन विशिष्टबुद्धौ विशेषणबुद्धेः कार-णत्वम्। विशिष्टप्रत्यक्षत्वावच्छिन्नं प्रति विशेष्यतावच्छेदकादिप्रकारक-निश्चयस्य कारणत्वात्। तदभावादेव एकसमये तदुभयोरसत्त्वान्न प्रतिबन्ध-कताप्रयोजनं न च संसर्गतावादिमतेऽप्येकविधप्रतिबध्यप्रतिबन्धकभावेनैव

योगानुकूलव्यापारवानिति बोधद्वयोरनापत्तिरिति चेन्न । तत्राणुपरिमाण-स्याणुपरिमाणनिरूपितत्वे गुणस्य गुणवृत्तित्वे च लक्षणया स्वरूपसम्बन्धेना-णुपरिमाणनिरूपितत्वाभाववज्जन्यत्ववान् घट इति बोधस्य स्वरूपसम्बन्धेन गुणवृत्तित्वाभाववत्संयोगानुकूलव्यापारवानिति बोधस्य च वक्तुं शक्यत्वेना दोषात् । न चाणुपरिमाणान्न गगनमित्यादौ दोषः । जन्यत्ववत्वस्य गगनेऽसत्त्वादिति वाच्यम् । नञर्थाभावस्य द्विधा भानेनादोषात् । स्वरूपसम्ब-न्धावच्छिन्नप्रतियोगिताकाणुपरिमाणनिरूपितत्वाभाववज्जन्यत्वाभाववद्गग-नमिति बोधः । न च नञर्थस्य द्विधा भानमेव गौरवमिति वा गुणो गुणन्न गच्छतीत्यादौ भवतामपि तथा कल्पनाया आवश्यकत्वात् । अन्यथा गुणवृ-त्तित्वाभाववत्संयोगानुकूलव्यापारवत्वस्य गुणेऽप्रसिद्धतया बोधानापत्तेः । गुणादीनां येन सम्बन्धेन यद्धर्मिणीति । नन्वेवं नियमो यदि स्यात्तर्हि संसर्ग-तावादिनां दोषः स्यात् तदेव न भूतले न घट इत्यादौ तात्पर्यसत्त्वे घटनिष्ठ-प्रतियोगिताकाभावो भूतलवृत्तिरित्येवमपि बोधदर्शनादन्यथा नञोऽसत्त्वे भूतलवृत्तित्ववान् घट इत्यस्यैव प्रतीत्या नञः सत्त्वे भूतलवृत्तित्वाभाववान् इत्येवं रूपेणैव बोधः स्यान्न तु घटत्वावच्छिन्नप्रतियोगिताकाभावो भूतल-वृत्तिरेवमिति ।

किञ्च घटो न घट इत्यादौ तादात्म्यसम्बन्धावच्छिन्नघटत्वावच्छि-न्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकशाब्द-बोधवारणाय तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वा-प्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रतियोगितावच्छेदकविशेष्यतावच्छेदकयोर्भेदः कारणमिति ग्रन्थकारेणैव

---

निर्वाहः । तथा हि घटवद्भूतलमित्येतादृशप्रत्यक्षत्वावच्छिन्नं प्रति तादृश-शाब्दसामग्र्याः प्रतिबन्धकतायास्तत्रापि अवश्यं कथनीयत्वात् । एवञ्च विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रति राज्ञः पुरुष इत्येतादृशवाक्यजन्य-शाब्दसामग्री प्रतिबन्धिकेति चेन्न । शाब्दसामग्री प्रत्यक्षप्रतिबन्धिका भवति ।

कसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वेऽपि राज्ञः पुरुष इत्यादौ

---

स्वीकृतमस्ति । निरुक्तनियमासत्त्वे तु तादात्म्यसम्बन्धेन घटे घटवत्ता नञोऽसत्त्वे न प्रतीयते। इति नञः सत्त्वेऽपि तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रकारकबोधो न स्यादेवेति तादृशशाब्दबोधवारणाय ग्रन्थकारप्रयासोऽपि व्यर्थतामेव व्रजेत्तस्मान्नञोऽसत्त्वे तत्सम्बन्धावच्छिन्नतद्धर्म्मावच्छिन्नप्रकारताकशाब्दबोधं प्रति साकाङ्क्षं यद्वाक्यन्तेन नञ्घटितेन तद्धर्म्मावच्छिन्नप्रतियोगिताकाभावश्चेद्बुबोधयिषितस्तर्हि तत्सम्बन्धावच्छिन्नप्रतियोगिताक एवेत्येव नियमस्तथा च यत्र द्रव्यस्य घटपदेन ग्रहणन्तत्र तादात्म्यसम्बन्धावच्छिन्नप्रकारताकद्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबोधो घटो घट इत्यादिवाक्यादपि भवतीति तादृशशाब्दबोधं प्रति साकाङ्क्षेन नञ्घटितेन वाक्ये घटत्वावच्छिन्नप्रतियोगिताकाभावोऽपि विवक्षित इति तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकस्तादृशाभावत्वावच्छिन्नप्रकारताकशाब्दबोधवारणाय तादृशकार्य्यकारणभावोऽप्यावश्यकः। एवं नञोऽसत्त्वे स्वरूपसम्बन्धेन भूतलवृत्तित्ववान् घट इति प्रतीयते। इति तादृशशाब्दबोधं प्रति साकाङ्क्षेन भूतले घट इति वाक्येन नञ्घटितेन न भूतलवृत्तित्वावच्छिन्नप्रतियोगिताकाभावो विवक्षितः किन्तु घटत्वावच्छिन्नप्रतियोगिताक इति नियमानाक्रान्ततया न तत्रापि शाब्दबोधानापत्तिरिति । एवञ्च स्वत्वसम्बन्धेन राजविशिष्टः पुरुष इति शाब्दबोधं प्रति साकाङ्क्षेन नञ्घटितेन राज्ञो न पुरुष इति वाक्येन राजत्वावच्छिन्नप्रतियोगिताकाभावो विवक्ष्यते। अपि तु राजस्वत्वत्वावच्छिन्नप्रतियोगिताक इति नियमानाक्रान्ततया न नियमतो विरोध इत्यरुचेराह—राज्ञः पुरुष इत्यादि। तत्सम्बन्धावच्छिन्न-

---

यदि तु प्रत्यक्षेच्छाऽस्ति शाब्देच्छा च नास्ति तत्र प्रत्यक्षं भवति। यत्र चोभयोरिच्छाऽस्ति तत्र शाब्दसामग्री प्रतिबन्धिका भवतीति वस्तुस्थितिः।

राजस्वत्वादेः प्रकारताभ्युपगमः समुचितः। अन्यथा तादृशसमभिव्याहारज्ञानघटितशाब्दसामग्रीकाले राजस्वत्वाभाववान्पुरुषः सुन्दर इत्याकारकविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकताकल्पनाधिक्येन गौरवात्।

---

तद्धर्म्मावच्छिन्नप्रकारतानिरूपिततद्धर्म्मावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति तेन सम्बन्धेन तद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताकतद्धर्म्मावच्छिन्नविशेष्यताकबुद्धेरेव प्रतिबन्धकत्वादिति भावः। यद्यपि राजभावव्याप्यवत्तामुद्रया राजस्वत्वाभाववान् पुरुष इति बुद्धेरपि स्वत्वसम्बन्धेन राजवान् पुरुष इति बुद्धिं प्रति प्रतिबन्धकत्वमस्त्येव तथाऽपि व्याप्यत्वाग्रहदशायामपि प्रतिबन्धकत्वमिष्टन्तन्न स्यादित्याशयेन ग्रन्थप्रवृत्तिरिति न ग्रन्थासङ्गतिः।

---

शाब्देच्छाविरहविशिष्टप्रत्यक्षेच्छाविरहविशिष्टराज्ञः पुरुष इत्येतादृशवाक्यजन्यशाब्दसामग्र्या विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रति प्रतिबन्धकत्वेऽपि यत्र घटवद्भूतलमिति प्रत्यक्षेच्छाऽस्ति घटवन्न भूतलमिति प्रत्यक्षसामग्री चास्ति तत्रापि घटवन्न भूतलमिति प्रत्यक्षं स्यात्। शाब्दसामग्र्याः शाब्देच्छाविरहविशिष्टप्रत्यक्षेच्छावत्त्वेन तद्विरहाभावेनाप्रतिबन्धकत्वात्। एवञ्च घटवन्न भूतलमिति प्रत्यक्षो मे जायतामित्येतादृशेच्छाविरहविशिष्टराज्ञः पुरुष इत्येतद्वाक्यजन्यशाब्दसामग्री घटवन्न भूतलमित्येतादृशप्रत्यक्षत्वावच्छिन्नं प्रति प्रतिबन्धिकेति। इच्छाविषयतायाः प्रतिबन्धकतावच्छेदकत्वोपगमेन एकरूपेण वक्तुमशक्यत्वात्। न च प्रत्यक्षविशिष्टेच्छाविरहविशिष्टशाब्दसामग्र्याः प्रतिबन्धकत्वम्। वैशिष्ट्यञ्च स्वविषयकत्वस्वसामग्रीसमानकालिकत्वैतदुभयसम्बन्धेन। एवञ्चान्यादृशप्रत्यक्षसामग्रीसद्भावे अन्यादृशप्रत्यक्षेच्छायाः प्रत्यक्षवैशिष्ट्याभावात् न दोष इत्युक्त्यैकरूपेणोच्यता-

अस्मन्मते तादृशसमभिव्याहारघटितसामग्र्या राजस्वत्वाभाववान् पुरुष इत्यादिबाधाभावघटिततया तत्सत्त्वे विशेष्यतावच्छेदकादिप्रकारकनिश्चयरूपकारणविरहादेव तथाविधविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षोत्पत्त्यसंभवेन तादृशसामग्र्यास्तत्र प्रतिबन्धकत्वस्याकल्पनात्। अन्यादृशप्रत्यक्षस्थलीयप्रतिबन्धकतया च न त्वन्मते निर्वाहः। अन्यत्रान्यविधप्रत्यक्षेच्छानामुत्तेजकतया

---

न त्वन्मते निर्वाह इति। संसर्गतावादिमते इत्यर्थः। न च विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रति राज्ञः पुरुष इत्यादिवाक्यजन्यशाब्दसामग्र्याः प्रतिबन्धकत्वं घटवद्भूतलमित्यादिप्रत्यक्षत्वावच्छिन्नं प्रति कल्पनमुभयोरावश्यकमिति तादृशप्रतिबन्धकतामादायैव निर्वाहे किं गौरवमिति चेत्-सत्यम्। तथा सति समानविषयकप्रत्यक्षस्य यत्किञ्चिदपेक्षा विभिन्नविषयकतादृशसामग्र्या अपि प्रतिबध्यत्वापत्तेः। एवञ्च नामोच्चारणपूर्वकं प्रतिबन्धकल्पनमावश्यकमिति तादृशविशिष्टबुद्धिं प्रति प्रतिबन्धकत्वं भवतामधिकमिति दिक्। स्वजन्यशाब्दबोधाविषयविषयकप्रत्यक्षत्वावच्छिन्नं प्रति राज्ञः पुरुष इत्यादिवाक्यजन्यशाब्दसामग्र्याः प्रतिबन्धकत्वं घटवद्भूतलं पटवद्भूतलमित्यादिनानाप्रत्यक्षत्वावच्छिन्नं प्रति अनुगतरीत्या प्रतिबन्धकत्वकल्पनमस्माकं भवताञ्चावश्यकमेवेति राजनिरूपितस्वत्वाभाववान् पुरुषः सुन्दर इत्यादिप्रत्यक्षस्यापि प्रतिबद्ध्यतावच्छेदकाक्रान्ततया तादृशप्रतिबद्ध्यप्रतिबन्धकभावेनैवेष्टसिद्धिरिति कथन्न निर्वाह इति वाच्यम्। यतो हि विभिन्नविषयकशाब्दसामग्र्याः प्रत्यक्षसामग्र्याश्च सत्त्वे प्रत्यक्षं जायता-

---

मिति वक्तव्यम्। घटवद्भूतलमित्येतादृशप्रत्यक्षसामग्रीसद्भावे तादृशप्रत्यक्षेच्छायाञ्च सत्यां पटवद्भूतलमित्येतादृशप्रत्यक्षसामग्र्याश्चावस्थानम्। न तु तादृशप्रत्यक्षेच्छा चास्ति। तत्र घटवद्भूतलं पटवद्भूतलमित्येतादृशसमूहाल-

मितीच्छायाञ्च सत्यां प्रत्यक्षमेव भवति प्रत्यक्षं विना इच्छाविषयासिद्धेः। उक्तानुगतरूपेण शाब्दसामग्र्याः प्रतिबन्धकताकल्पनायान्तु प्रत्यक्षं दुरुपपादमेव स्यादिति घटवद्भूतलमित्यादिप्रत्यक्षेच्छाविरहविशिष्टराज्ञः पुरुष इति वाक्यजन्यशाब्दसामग्री घटवद्भूतलमित्यादिप्रत्यक्षत्वावच्छिन्नं प्रति प्रतिबन्धिकेति विशिष्यैव प्रतिबध्यप्रतिबन्धकभावः कल्पनीय इति राजनिरूपितस्वत्वाभाववान् पुरुष इत्यादि प्रत्यक्षं प्रति प्रतिबन्धकताकल्पनं संसर्गतावादिनां गौरवमिति।

यत्तु घटवद्भूतलमितिप्रत्यक्षेच्छाविरहविशिष्टराज्ञः पुरुष इति वाक्यजन्यशाब्दसामग्री विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रति प्रतिबन्धिकेति अन्यदीयप्रत्यक्षस्थलीयप्रतिबन्धकतामादाय निरुक्तप्रत्यक्षस्यापि प्रतिबध्यत्वमिति तदपि न। पटवद्भूतलमित्यादिप्रत्यक्षसामग्री राज्ञः पुरुष इति शाब्दसामग्री च यत्रास्ति तत्र पटवद्भूतलमिति प्रत्यक्षं जायतामितीच्छायां प्रत्यक्षं जायते। इदानीं हि घटवद्भूतलमित्यादिप्रत्यक्षेच्छाविरहविशिष्टराज्ञः पुरुष इति वाक्यजन्यशाब्दसामग्र्याश्च सत्त्वेन प्रतिबन्धकसद्भावात् प्रत्यक्षत्वानापत्तेः। सामान्येन प्रत्यक्षेच्छाविरहविशिष्टशाब्दसामग्र्या प्रतिबन्धकत्वमित्यपि न वक्तुं शक्यते, यद्विषयकप्रत्यक्षसामग्री तदन्यविषयकप्रत्यक्षेच्छायामपि प्रत्यक्षापत्तेरिति नान्यदीयप्रत्यक्षस्थलीयप्रतिबन्धकतामादाय संसर्गतावादिनां निर्वाह इति विशिष्य प्रतिबध्यप्रतिबन्धकभावकल्पनायां गौरवमिति बोध्यम्। यदप्याहुः—स्वजन्यशाब्दबोधाविषयविषयकत्वस्वसमानाधिकरणेच्छाविषयत्वाभाववत्त्वोभयसम्बन्धेन स्वविशिष्टप्रत्यक्षत्वावच्छिन्नम्प्रति राज्ञः पुरुष इति वाक्यजन्यशाब्दसामग्र्याः प्रतिबन्धकत्वमित्यनुगमसम्भवस्तथा च यत्र विभिन्नविषयकप्रत्यक्षसामग्री शाब्दसामग्री चास्ति तत्र चासत्यां प्रत्यक्षेच्छायां शाब्दबोध एव, न प्रत्यक्षं तस्य

---

स्वनात्मकप्रत्यक्षन्न भवति। राज्ञः पुरुष इत्येतद्वाक्यजन्यशाब्दसामग्रीकाले पटवद्भूतलमित्येतादृशप्रत्यक्षस्य बाधात्। किन्तु घटवद्भूतलमित्येतादृशप्रत्यक्ष-

निरुक्तसम्बन्धेन, शाब्दसामग्रीविशिष्टत्वेन तं प्रति तस्याः प्रतिबन्धकत्वात्। यत्र च प्रत्यक्षेच्छा तत्र स्वसमानाधिकरणेच्छाविषयत्वमेव प्रत्यक्षस्येति न तत्र तं प्रति तादृशसामग्र्याः प्रतिबन्धकत्वमिति प्रत्यक्षमेव न शाब्दबोधः। एवञ्च राजनिरूपितस्वत्वाभाववान् पुरुष इति प्रत्यक्षस्यापि निरुक्तद्वयसम्बन्धेन शाब्दसामग्रीविशिष्टत्वात् तत्प्रत्यपि शाब्दसामग्र्याः प्रतिबन्धकत्वेन प्रत्यक्षवारणसम्भवान्न विशिष्य तादृशप्रत्यक्षम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनमिति न संसर्गतावादादिनामपि गौरवमिति तदपि न। यत्र निरुक्तशाब्दसामग्री प्रत्यक्षसामग्री चास्ति चैत्रस्य मयि प्रत्यक्षं जायतामितीच्छाऽस्ति तत्र चैत्रवृत्तीच्छाया अपि स्वाधिकरणकालवृत्तित्वेन शाब्दसामग्रीसमानाधिकरणतादृशेच्छाविषयत्वमेव प्रत्यक्षस्येति इच्छाविषयत्वाभाववत्त्वरूपसम्बन्धासंघटनात् सामग्रीविशिष्टत्वाभावेन निरुक्तप्रतिवध्यप्रतिबन्धकभावानाक्रान्ततया तादृशेच्छाया अप्युत्तेजकत्वापत्तेः। इष्टन्तु नोत्तेजकत्वं प्रत्यक्षेऽपि तदिच्छाया विषयासिद्धेः। भूतकालिकेच्छाया अप्युक्तरीत्या उत्तेजकत्वापत्तेश्च यद्यपि स्वाधिकरणकालवृत्तित्वस्वाधिकरणदेशवृत्तित्वोभयसम्बन्धेन सामग्रीविशिष्टत्वस्यैव स्वसमानाधिकरणत्वेनादोषस्तथापि यत्र विभिन्नविषयकप्रत्यक्षसामग्री शाब्दसामग्रीज्ञानञ्जायतामितीच्छा चास्ति तत इच्छायाः प्रत्यक्षोत्तेजकत्वं नास्ति तं विनाऽपि विषयसिद्धेः। इदानीञ्च सामग्रीविशिष्टतादृशेच्छाविषयत्वमेव प्रत्यक्षस्येति इच्छाविषयत्वाभाववत्त्वाभावात् तादृशप्रत्यक्षम्प्रति प्रतिबन्धकत्वाभावात् प्रत्यक्षान्तरया तादृशेच्छाया अप्युत्तेजकत्वापत्तेस्तादृशरीत्यानानुगमसम्भवः। न च स्वविशिष्टेच्छाविषयत्वाभाववत्त्वस्य स्थाने स्वविशिष्टेच्छानिरूपितप्रत्यक्षत्वावच्छिन्नविषयत्वाभाववत्त्वस्य निवेशेनादोषः। ज्ञानञ्जायतामिती-

---

मेव भवति। तत्राधुना प्रत्यक्षेच्छाविरहविशिष्टाभावेन तादृशशाब्दसामग्र्याः प्रतिबन्धकत्वाभावात् घटवद्भूतलमित्येतादृशप्रत्यक्षमपि स्यात्। न च राज्ञः पुरुष इत्येतद्वाक्यजन्यशाब्दसामग्री स्ववृत्तिविरहप्रतियोगिनीच्छा-

च्छीयज्ञानत्वावच्छिन्नविषयतायाः प्रत्यक्षे सत्त्वेऽपि प्रत्यक्षत्वावच्छिन्नविषयता नास्तीति सम्बन्धघटनात् निरुक्तप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वात्। नन्वेवमपि यत्र राज्ञः पुरुष इत्यादिवाक्यजन्यशाब्दसामग्री घटवद्भूतलमित्यादिप्रत्यक्षसामग्री चास्ति तत्र शाब्देतरज्ञानञ्जायतामितीच्छायां प्रत्यक्षमेव जायत इतीच्छाया उत्तेजकत्वात्। साम्प्रतञ्च शाब्दसामग्रीविशिष्टेच्छानिरूपितशाब्देतरत्वावच्छिन्नैव विषयता न तु प्रत्यक्षत्वावच्छिन्नेति प्रत्यक्षत्वावच्छिन्नविषयत्वाभाववत्त्वस्य प्रत्यक्षे सत्त्वात्। तादृशप्रत्यक्षत्वावच्छिन्नं प्रत्यपि राज्ञः पुरुष इत्यादिवाक्यजन्यशाब्दसामग्र्याः प्रतिबन्धकत्वापत्तिरिति चेत्-न। स्वजन्यशाब्दबोधाविषयविषयकत्वस्वजन्यशाब्दबोधावृत्तित्व-स्वविशिष्टेच्छानिरूपितत्वोभयसम्बन्धेन स्वविशिष्टविषयत्वाभाववत्त्वोभयसम्बन्धेन स्वविशिष्टप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनेन शाब्देतरज्ञानञ्जायतामितीच्छीयविषयताया निरुक्तोभयसम्बन्धेन सामग्रीविशिष्टत्वेन तादृशविषयतावत्त्वस्यैव प्रत्यक्षे सत्त्वेन निरुक्तोभयसम्बन्धेन सामग्रीविशिष्टत्वाभावात् तादृशप्रत्यक्षम्प्रत्यप्रतिबन्धकत्वेनादोषात्। न च यत्र शाब्दसामग्री प्रत्यक्षसामग्री च तत्र प्रत्यक्षाभावो जायतामितीच्छायामपि शाब्दबोध एव न प्रत्यक्षमिति सिद्धान्तः। स चेदानीमनुपपन्नस्तादृशेच्छीयप्रत्यक्षवृत्तिविषयतायां राज्ञः पुरुष इति वाक्यजन्यशाब्दसामग्रीजन्यशाब्दबोधवृत्तित्व-स्वविशिष्टेच्छानिरूपितत्वयोस्सत्त्वात् स्वविशिष्टत्वे न स्वविशिष्टविषयत्वाभाववत्त्वरूपसंबन्धाघटनात् स्वविशिष्टत्वाभावात्तादृशप्रत्यक्षम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वानापत्त्या प्रत्यक्षस्य दुर्वारत्वादिति वाच्यम्। स्वविशिष्टमुख्यविशेष्यत्वाभाववत्त्वस्य सम्बन्धत्वेनादोषात्। प्रकृतविषय-

---

विशिष्टप्रत्यक्षत्वावच्छिन्नं प्रति प्रतिबन्धिका स्वविषयत्वस्वसमानकालीनसामग्रीनिरूपकत्वैतदुभयसम्बन्धेनेति वाच्यम्। प्रत्यक्षस्य प्रतिबध्यत्वात्। इच्छाविशिष्टतादृशप्रत्यक्षाभावात्। एवञ्च घटवद्भूतलमित्येतादृशप्रत्य-

ताया अभावनिष्ठविशेष्यतानिरूपितप्रकारतासामानाधिकरण्येन मुख्यत्वाभावात्। नन्वेवमपि प्रतियोगितासम्बन्धेनाभावविशिष्टं प्रत्यक्षञ्जायतामितीच्छायां शाब्दसामग्र्याः प्रतिबन्धकत्वानापत्त्या प्रत्यक्षं दुर्वारमिति चेन्न। अभावनिष्ठविषयतानिरूपितप्रतियोगित्वनिष्ठविषयतानिरूपितत्वाभाववती या स्वविशिष्टाविषयता तदभाववत्त्वस्यैव प्रवेशेनादोषात्। यत्तु अन्यस्य प्रत्यक्षसामग्री शाब्दसामग्री चास्ति अन्यस्य प्रत्यक्षञ्जायतामितीच्छा तादृशेच्छीयविषयतायाः सामग्रीविशिष्टत्वात् तदभावस्वत्वाभावात् प्रत्यक्षं प्रति प्रतिबन्धकत्वानापत्तिः। एवं मासादूर्ध्वं प्रत्यक्षञ्जायतामितीच्छायामपीति वदन्ति—तन्न युक्तम्। अन्यवृत्तित्वविशिष्टे मासोत्तरत्वविशिष्टे च प्रत्यक्षे तादृशविषयता च यस्य प्रत्यक्षसामग्री तदीयप्रत्यक्षस्य तत्कालिकस्य तादृशविषयत्वाभाववत्त्वमेवेति स्वविशिष्टत्वात् तादृशप्रत्यक्षप्रतिबन्धकत्वसिद्धेः। वस्तुतस्तु यत्र घटवद्भूतलमिति प्रत्यक्षसामग्री अनुमितिसामग्री राज्ञः पुरुष इतिवाक्यजन्यशाब्दसामग्री चास्ति शाब्देतरज्ञानञ्जायतामितीच्छायामनुमित्याऽपीच्छाया विषयसिद्ध्या इच्छाया अनुत्तेजकतया शाब्दबोध एव, न प्रत्यक्षादिकं, तच्चेदानीमनुपपन्नन्तादृशप्रत्यक्षस्य स्वविशिष्टविषयतावत्त्वेन सम्बन्धासंघटनात् तत्प्रत्यक्षम्प्रति प्रतिबन्धकत्वानापत्तेरिति नानुगमसम्भवः। तथा च राजनिरूपितस्वत्वाभाववान् पुरुषः सुन्दर इति प्रत्यक्षत्वावच्छिन्नम्प्रति राज्ञः पुरुष इति वाक्यजन्यशाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनं संसर्गतावादिनां गौरवमिति सुधियो विभावयन्तु। प्रकारतावादिनान्तु नेति मूल एवोपपादितमिति तत्रैव द्रष्टव्यम्। स्वोत्तरत्वसम्बन्धेन स्वसमानाधिकरणेच्छाविशिष्टान्यस्वजन्यशाब्दबोधविषयकप्रत्यक्षत्वावच्छिन्नम्प्रति राज्ञः पुरुष इति वाक्यजन्यशाब्दसामग्र्याः प्रतिबन्धकत्वमित्यनु-

---

क्षत्वावच्छिन्नं प्रति स्वत्वसंसर्गावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकशाब्दसामग्रीत्वेनैव प्रतिबन्धकताकल्पनात्। एकः प्रतिबध्यप्रबन्धकभावः संसर्गतावादिमतेऽधिकं इत्यवधेयम्।

गतरीत्या प्रतिबध्यप्रतिबन्धकभावकल्पनायान्तु अन्यप्रत्यक्षस्थलीयप्रतिबन्धकतामादायैव निर्वाह इति मूलञ्चिन्त्यमेवेति तत्त्वम् ।

यत्तु स्वत्वसम्बन्धेन राजाभाववान् पुरुषः सुन्दर इति प्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनं प्रकारतावादिनामप्यावश्यकमित्युभयं समानमेवेति—तन्न ।

तत्प्रतिदाने निरूपितत्वसम्बन्धेन राजाभाववत्स्वत्वं प्रमेयमित्यादिप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनायाः संसर्गतावादिनामावश्यकतयोपदर्शितविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षत्वावच्छिन्नम्प्रति प्रतिबन्धकत्वकल्पनाधिक्येन संसर्गतावादिनामेव गौरवात् ।

यदप्याहुः स्वत्वप्रकारकबोधोपगमे शाब्दसामग्रीकुक्षौ निरूपितत्वसम्बन्धेन राजाभाववत्स्वत्वमिति बाधनिश्चयाभावस्य राजनिरूपितस्वत्वाभाववान् पुरुष इति बाधनिश्चयाभावस्य च प्रवेशः संसर्गतावादिनां स्वत्वसम्बन्धेन राजाभाववान् पुरुष इत्येकबाधनिश्चयाभावस्यैवेति विभिन्नविषयकप्रत्यक्षम्प्रति सामग्र्यां प्रतिबन्धकत्वे प्रतिबन्धकतावच्छेदककोटौ प्रत्ययजन्यस्वत्वाद्युपस्थितेः उभयबाधनिश्चयाभावस्य च प्रकारतावादिनां प्रवेशः। संसर्गतावादिनां चैकबाधनिश्चयाभावस्यैवेति प्रकारतावादिनामेव गौरवमिति-तदपि न। स्वत्वसम्बन्धेन राजाभावव्याप्यराजनिरूपितस्वत्वाभाववान् पुरुष इति बाधनिश्चयाभावस्य प्रकारतावादिनां राजनिरूपितस्वत्वाभाववान् पुरुष इति बाधनिश्चयाभावप्रवेशेनैव गतार्थतया स्वत्वसम्बन्धेन राजाभावव्याप्यराजनिरूपितस्वत्वाभाववान् पुरुष इति निश्चयकाले शाब्दबोधानुपपत्त्या संसर्गतावादिनां च तदभावस्यापि गुरुधर्म्मकस्य निवेशनीयतया लाघवानवकाशात् । न च राजनिरूपितस्वत्वाभावव्याप्यस्वत्वसम्बन्धेन

---

ननु योग्यताज्ञानादिघटितशाब्दसामग्री शाब्दजननी भवति । जनकता च न तत्र समुदायत्वेन वक्तुं शक्या समुदायत्वस्यापेक्षाबुद्धिविशेषविषयत्वरूपत्वेन तादृशापेक्षाबुद्धिमन्तराऽपि कार्य्योत्पत्तेरिष्टत्वात् । एवञ्च योग्य-

राजाभाववान् पुरुष इति निश्चयस्य व्याप्यवत्तानिश्चयमुद्रया प्रकारतावादिनां मते प्रतिबंधकत्वेन तदभावस्यापि शाब्दसामग्रीकोटौ निवेशनीयतया गौरवम् । संसर्गतावादिनां स्वत्वसम्बन्धेन राजाभाववान् पुरुष इति बाधनिश्चयाभावनिवेशेनैवात्रापि निर्वाहादिति वाच्यम् । यतो हि व्यापकसामानाधिकरण्यं व्याप्तिः व्यापकत्वं च यस्य व्याप्यत्वं विवक्षितन्तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्म्मवत्वन्तथा च स्वत्वसंसर्गकराजप्रकारकपुरुषत्वावच्छिन्नविशेष्यकबुद्धौ स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकराजस्वत्वाभावसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं यत्स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावत्वन्तद्वत्समानाधिकरणराजनिरूपितत्वाभावत्वावच्छिन्नप्रकारताकपुरुषत्वावच्छिन्नविशेष्यताकनिश्चयः प्रतिबन्धक इति तादृशनिश्चयत्वावच्छिन्नप्रतियोगिताकाभावः शाब्दसामग्र्यां प्रवेशनीयः संसर्गतावादिनेति । विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदककोटौ राजस्वत्वाभावत्वरूपस्वत्वघटितगुरुधर्मस्य द्विधा प्रवेशः । राजस्वत्वप्रकारकबुद्धौ तु स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकराजस्वत्वाभावत्ववत् समानाधिकरणस्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावत्वावच्छिन्नप्रकारताकपुरुषत्वावच्छिन्नविशेष्यताकनिश्चयस्य प्रतिबन्धकत्वेन तदभावस्यैव शाब्दसामग्र्यां प्रवेश इति विभिन्नविषयकप्रत्यक्षप्रतिबन्धकतावच्छेदककोटौ राजाभावत्वरूपलघुधर्म्मस्य द्विधा भानमिति महल्-

---

ताज्ञानादिविशिष्टाकाङ्क्षाज्ञानत्वेन कारणताऽऽकाङ्क्षाज्ञानादिविशिष्टयोग्यताज्ञानत्वेन वा कारणता । एवञ्च विनिगमनाविरहात् सामग्रीघटकयावतामपि पर्य्यायेण कारणतावच्छेदकत्वं सिद्ध्यति ।

एवं स्थिते प्रकारतावादिमते योग्यताज्ञानमेव द्विविधम् । निरूपितत्वसम्बन्धावच्छिन्नराजाद्यभाववत्तानिश्चयरूपबाधाभावो योग्यतास्वरूपसंसर्गावच्छिन्नस्वत्वत्वाद्यवच्छिन्नस्वत्वाद्यभाववत्तानिश्चयरूपबाधाभावो यो-

लाघवं प्रकारतावादिनाम् । न च स्वत्वप्रकारकबुद्धौ निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत् स्वत्वमित्यपि प्रतिबन्धकम् । एवं तदभावव्याप्यवत्तानिश्चयमुद्रया निरूपितत्वसम्बन्धावच्छिन्नराजाभावव्याप्यराजनिरूपितत्वाभाववत्स्वत्वमिति तादृशाभावव्याप्यघटवत्स्वत्वम् । एवं तादृशाभावव्याप्यपटवत् स्वत्वमित्याद्यनन्तानन्तज्ञानम्प्रतिबन्धकमिति सर्वेषामभावस्य शाब्दसामग्र्यां प्रवेशः । एवं राजनिरूपितस्वत्वाभावव्याप्यस्वत्वसम्बन्धेन राजाभाववान् पुरुष इति तादृशाभावव्याप्यघटवान् पटवान् इत्याद्यनन्तानन्तज्ञानं प्रतिबन्धकमित्येतेषामप्यभावः शाब्दसामग्र्यां प्रवेशनीय इति द्विविधानन्तानन्तानामभावानां शाब्दसामग्र्यां प्रवेश आवश्यकः प्रकारतावादिनामिति विभिन्नविषयकप्रत्यक्षप्रतिबन्धकतावच्छेदककोटौ सर्वेषामेवानन्तानन्ताभावानां प्रवेशः । स्वत्वसंसर्गकबोधे च स्वत्वसम्बन्धेन राजाभावव्याप्यराजस्वत्वाभाववान् पुरुषः एवं तादृशाभावव्याप्यघटवान् पटवानित्येकविधमेवानन्तानन्तज्ञानं प्रतिबन्धकमित्येकविधानामेवानन्तानन्ताभावानां शाब्दसामग्र्यां प्रवेशः, विभिन्नविषयकप्रत्यक्षप्रतिबन्धकतावच्छेदककोटौ प्रवेशश्चेति लाघवेन प्रकारतावादिनां महद्गौरवम् । यद्यपि निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यत्वावच्छिन्नप्रकारताकस्वत्वत्वावच्छिन्नविशेष्यताकनिश्चयाभावस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकराजस्वत्वाभावव्याप्यत्वावच्छिन्नप्रकारताकपुरुषत्वावच्छिन्नविशेष्यताकनिश्चयाभावस्य च प्रवेशेन सर्वेषामेवाभावानामनन्तानामनुगमसम्भवेनोभयविधानामेव भावानां शाब्दसामग्र्यां प्रवेशः प्रकारतावादिमते तथापि संसर्गमतापेक्षयाऽस्य गुरुत्वम् । संसर्गतावादिनामपि स्वत्वसम्बन्ध-

---

ग्यता एवं योग्यताया द्वैविध्यं ज्ञानस्य द्वैविध्यं सुतराम् । संसर्गतावादिमते तु स्वत्वसंसर्गावच्छिन्नराजाद्यभाववत्तानिश्चयरूपबाधाभावयोग्यता ज्ञानस्यैव कारणत्वेनेति एकं लाघवं किञ्च उपस्थिते कारणत्वात् । सा च प्रकारतावादिमते राजपदजन्यराजत्वावच्छिन्ना ङस्पदजन्यस्वत्वत्वावच्छिन्ना पुरुष-

स्वावच्छिन्नप्रतियोगिताकराजाभावव्याप्यत्वावच्छिन्नप्रकारताकपुरुषत्वावच्छिन्नविशेष्यताकनिश्चयाभावप्रवेशेनैवोक्तानन्तानन्ताभावानामनुगमसम्भवेन तन्मते एकविधाभावस्यैव प्रवेशः। वस्तुत एवमपि नानुगमसम्भवः। व्यापकत्वस्य व्यापकसामानाधिकरण्यरूपतया सर्वेषां पदार्थानां प्रवेशस्यावश्यकत्वेन गौरवस्य तदवस्थत्वात्। तस्माद्राजसुत्वप्रकारकशाब्दबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताश्रयसामान्याभावत्वेन सर्वेषामेवाभावानां प्रवेशसम्भवादेकरूपेण सम्भवत्यनुगम इति विचारणीयम्। प्रकारतावादिमते चोक्तरीत्या द्विविधाभावस्येति लाघवानवकाशादिति वाच्यम्। यतो हि संसर्गतावादिमते निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्वं प्रमेयम्। निरूपितत्वसम्बन्धेन राजाभावव्याप्यराजनिरूपितत्वाभाववत्स्वत्वं प्रमेयम्। तादृशाभावव्याप्यघटवत्स्वत्वं प्रमेयम्। एवं तादृशाभावव्याप्यपटवत्स्वत्वं प्रमेयम्। एवं राजस्वत्वाभावव्याप्यस्वत्वसम्बन्धेन राजाभाववान् पुरुषः सुन्दरः। राजस्वत्वाभावव्याप्यघटवान् पुरुषः सुन्दरः। एवन्तादृशाभावव्याप्यपटवान् पुरुषः सुन्दर इत्यादि द्विविधानन्तानन्तविभिन्नविषयकप्रत्यक्षज्ञानम्प्रति राज्ञः पुरुष एतद्वाक्यजन्यशाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनमावश्यकम्। प्रकारतावादिमते च उक्तानन्तानन्तप्रत्यक्षकारणीभूतस्य विशेष्यतावच्छेदकप्रकारकज्ञानस्य निरूपितत्वसम्बन्धेन राजाभावव्याप्यराजनिरूपितत्वाभाववत् स्वत्वमित्याद्यनन्तानन्तरूपस्य राजस्वत्वाभावव्याप्यस्वत्वसम्बन्धेन राजाभाववान् पुरुष इत्याद्यनन्तानन्तरूपस्य निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकनिश्चयरूपबाधघटिततया राजस्वत्वाभावव्याप्यत्वावच्छिन्नप्रकारताकपुरुषत्वावच्छिन्नविशेष्यताकनिश्चयरूपबाधघ-

---

पदजन्यपुरुषत्वावच्छिन्नेति गौरवम्। संसर्गतावादिमते तु राजपदजन्यराजत्वावच्छिन्ना पुरुषपदजन्यपुरुषत्वावच्छिन्ना चेति द्वितीयं लाघवम्। किं बहुना योग्यताज्ञानोपस्थित्याकाङ्क्षारूपकारणस्य प्रकारतावादिमते कारणतावच्छेदकभेदात् षड्विधत्वे सामग्र्याश्च तादृशकारणविशिष्टरू-

तादृशेच्छायामसत्यं चोपदर्शितविशिष्टवैशिष्ट्यबोधत्वप्रकारेच्छाबलादुपदर्शितविशिष्टवैशिष्ट्यबोधोपपत्तये अन्यादृशविषयताया एव प्रविवध्यतावच्छेदकत्वोपगमावश्यकत्वात्। न च स्वत्वादेः प्रकारतामतेऽपि स्वत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकराजाद्यभावविशिष्टपुरुषादिवैशिष्ट्यबोधे तथाविधसामग्र्याः प्रतिबन्धकताधिक्येन गौरवम्। तत्संसर्गतामते तादृशसामग्र्याः स्वत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकराजाद्यभाववत्तानिश्चयाभावघटिततया तत्सत्त्वे कारणविरहादेव तथाविधप्रत्यक्षवारणसंभवादिति

---

टिततया तादृशबोधाभावघटितशाब्दसामग्रीकाले निरुक्तानन्तानन्तप्रत्यक्षकारणीभूतनिरुक्ततत्तद्रूपविशेष्यतावच्छेदकप्रकारकज्ञानस्याभावात् कारणाभावादेव तादृशानन्तानन्तप्रत्यक्षानापत्त्या द्विविधतादृशानन्तानन्तप्रत्यक्षम्प्रति प्रतिबन्धकत्वकल्पनन्नावश्यकम्, किन्तु स्वत्वसम्बन्धेन राजाभावव्याप्यराजस्वत्वाभाववान् पुरुषः सुन्दर एवं तादृशाभावव्याप्यघटवान् पुरुषः सुन्दरः पटवान् पुरुषः सुन्दर इत्याद्यैकविधानन्तानन्तप्रत्यक्षं प्रत्येवेति महल्लाघवमित्याहुः।

संसर्गतावादिनां च नैतत्प्रतिबन्धकत्वकल्पनमावश्यकमेतत्प्रत्यक्षकारणीभूतविशेष्यतावच्छेदकप्रकारकज्ञानस्य स्वत्वसम्बन्धेन राजाभावव्याप्यराजस्वत्वाभाववान् पुरुष इत्यादिरूपस्य बाधनिश्चयघटिततया तादृशबाधाभावघटितशाब्दसामग्रीकाले कारणाभावादेव प्रत्यक्षासम्भवेन शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनाया अनावश्यकत्वादित्यपि बोध्यम्।

---

पत्वात् तेषां गणनया विंशत्यधिकसप्तशतसंख्याककारणानि भविष्यन्ति। संसर्गतावादिमते तु चतुर्विंशति कारणानि भवन्तीतिमहल्लाघवं किम्पुनः कारणान्तरविशिष्टेन तेन सह गणनयेत्येतदेव संसर्गतावादिमतमुपपादयतिन चेत्यादिना।

वाच्यम् । मन्मते तादृशप्रत्यक्षं प्रति तथाविधसामग्र्याः प्रतिबन्धकत्वाधिक्येऽपि निरूपितत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकराजाद्यभावविशिष्टस्वत्वादिवैशिष्ट्यबोधे तथाविधसामग्र्याः प्रतिबन्धकताऽकल्पनेन तदंशे साम्यात् । तथा च पूर्वोक्तराजस्वत्वाभाववान् पुरुषः सुन्दर इत्यादिविशिष्टवैशिष्ट्यप्रत्यक्षं प्रति राज्ञः पुरुषः इत्यादिसामग्र्याः प्रतिबन्धकत्वकल्पनं संसर्गतावादिनां मतेऽधिकमिति । न च स्वत्वादेः प्रकारतामते घटप्रत्यक्षादिकं प्रति तादृशसामग्रीप्रतिबन्धकतायां विभक्तिजन्यस्वत्वाद्युपस्थितिनिवेशाधिक्येन राजस्वत्वाभाववान्पुरुष इत्यादिबाधाद्यभावनिवेशाधिक्येन च गौरवम् । अस्मन्मते तादृशोपस्थितितथाविधबाधाभावादीनां तथाविधवाक्यजन्यशाब्दबोधं प्रत्यहेतुतया तादृशवाक्यघटितसामग्रीप्रतिबन्धकतायां तेषामनिवेशादिति वाच्यम् ।

भवन्मतेऽपि स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वाभाववान्पुरुष इत्यादिनिश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया तादृशवाक्यजन्यशाब्दधीविरोधितया तादृशनिश्चयाभावस्य तथाविधसामग्रीप्रतिबन्धकतायां निवेशनस्याधिक्येन लाघवानवकाशात् ।

मन्मते राजस्वत्वाभाववान् पुरुष इत्यादिबाधकाभावनिवेशेनैव तादृशनिश्चयकाले प्रत्यक्षाभ्युपपत्तेस्तदभावानिवेशात् । यत्तु राज्ञः

---

संसर्गतावादिमतं खण्डयन् प्रकारतावादिमतमुपपादयति—भवन्मतेऽपीत्यादिना । अस्यायं भावः । बाधाभावो योग्यताघटकश्च तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयः तदभावव्याप्यवत्तानिश्चयश्चेति प्रकारतावादिमते स्वरूपसम्बन्धावच्छिन्नराजनिरूपितस्वत्वत्वाद्यवच्छिन्नप्रकारतानिरूपितपुरुष-

पुरुष इत्यादौ राजस्वत्ववान् पुरुष इत्याद्यन्वयबोधोपगमे राजकीयं स्वत्वं राजस्वत्ववान् पुरुष इत्याकारकद्विविधानुमितेरेव तदतिरिक्ताविषयकत्वेन[१] तादृशानुमितिं प्रति प्रत्येकं तादृशवाक्यघटितसामग्र्याः प्रतिबन्धकत्वद्वयम् ।

अस्मन्मते[२] च तादृशानुमित्योस्तथाविधवाक्यजन्याद्राजकीयः पुरुष इत्येतादृशबोधादतिरिक्तविषयकतया तत्र तादृशसामग्र्याः

---

त्वावच्छिन्नविशेष्यताकबुद्धित्वावच्छिन्नं प्रति स्वरूपसम्बन्धावच्छिन्नराजनिरूपितस्वत्वत्वाद्यवच्छिन्नप्रतियोगिताकाभाववत्तानिश्चयः । तादृशाभावव्याप्यस्वत्वसंसर्गावच्छिन्नराजाद्यभाववत्तानिश्चयश्च बाधस्तदभावो योग्यता । एवञ्चात्र तदभावव्याप्यवत्तामुद्रया स्वत्वसंसर्गावच्छिन्नराजाद्यभावस्य

---

[१]अनुमितौ शाब्दसमानविषयकत्वं शाब्दीयविषयतानवच्छेदकधर्म्मावच्छिन्नविषयताया अनिरूपकत्वम् । वस्तुतस्तु शाब्दीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकतानिरूपकविषयतानिरूपकत्वमिति ।

[२]अस्मन्मतेऽपीति । अत्रेदं तत्त्वं—समानविषयकानुमितित्वावच्छिन्नं प्रति समानविषयकप्रत्यक्षसामग्री प्रतिबन्धिकेत्यत्र समानविषयकत्वस्य यद्यतिरिक्तविषयकत्वाभावस्वरूपत्वं चेत् तदा राज्ञः पुरुष इत्येतद्वाक्यजन्यशाब्दसामग्र्याः राजकीयं स्वत्वं राजस्वत्ववान् पुरुष इत्याकारकद्विविधानुमितेः प्रतिबन्धकता भवति समानविषयकत्वात् । यदि तु समानविषयकत्वं नाम अन्यूनानतिरिक्तविषयकत्वमित्युच्यते तदा न राजकीयं स्वत्वं इत्याकारिका न वा राजस्वत्ववान् पुरुष इत्याकारिका वा अनुमितिः प्रतिबन्धिका । अनुमितेः न्यूनविषयताकत्वात् । एवञ्च तादृशानुमितिद्वयं प्रकारतावादिमतेऽपि भवत्येवेति गम्यते गदाधरभट्टाचार्य्याभिप्रायो रमणीयो मया ।

प्रतिबन्धकत्वकल्पनं नास्ति, तथाविधानुमितितथाविधशाब्दसामग्र्योश्च सत्त्योरनुमितेरेवोत्पत्तेः, अपि तु राजकीयः पुरुष इत्याकारकस्वत्वसंसर्गकैकविधानुमितिं प्रत्येव तादृशसामग्र्याः प्रतिबन्धकत्वमेकं कल्पनीयमिति लाघवमिति । तदप्यकिंचित्करम् ।

भवन्मते यत्र यादृशानुमितिः स्वीक्रियते अस्मन्मतेऽपि तत्र तादृशानुमितेः स्वीकरणीयेत्यनुमितौ शाब्दसामग्र्याः प्रतिबन्धकत्वसाम्यात्, उपदर्शितस्थले भवद्भिरनुमितिः स्वीक्रियते अस्माभिरपि स्वीक्रियते, कुतः प्रतिबन्धकताद्वयकल्पनमिति भवतापि तादृशशाब्दं प्रति तादृशानुमितिद्वयसामग्रीद्वयस्य प्रतिप्रबन्धकताया वाच्यतया साम्याच्च । एवं राजपुरुष इत्यादिसमासवाक्यात्स्वत्वसंसर्गकशाब्दबोधस्वीकारे तादृशशाब्दबोधसामग्र्याः स्वत्वसंसर्गेण राजविशिष्टपुरुषतात्पर्यज्ञानादिघटिताया भिन्नविषयकप्रत्यक्षादिकं प्रति प्रतिबन्धकत्वाधिक्येन गौरवात् । तत्र राजसम्बन्धिप्रकारकाभेदान्वयबोधस्वीकार एवोचितः । न च भवन्मतेऽपि तादृशाभेदान्वयबोधसामग्र्याः प्रतिबन्धकत्वाधिक्येन गौरवमिति वाच्यम् । राजसम्बन्धिनि स्वारसिकलक्षणाग्रहदशायामभेदसम्बन्धेन राजसम्बन्धिविशिष्टपुरुषे तात्पर्यग्रहसत्त्वे भवन्मतेऽपि कर्मधारयत्वेनाभिमतात्तथाविधसमासवाक्यात्तादृशशाब्दबोधस्वीकारस्यावश्यकतया तादृशसामग्रीप्रतिबन्धकतया उभयमतसिद्धत्वात् ।

यत्तु दधि पश्य इत्यादौ लुप्तद्वितीयाविभक्तिस्मरणेन दधिकर्मकदर्शनबोधवद्राजपुरुष इत्यादावपि लुप्तषष्ठीविभक्तिस्मरणेन राज-

---

बाधत्वं स्थितम् । संसर्गतावादिमते तु स्वत्वसंसर्गावच्छिन्नराजाद्यभावव्याप्यवत्तानिश्चयमुद्रया राजनिरूपितस्वत्वभावस्य बाधकत्वे स्वत्वसंसर्गेण राजाद्यभावापेक्षया राजनिरूपितस्वत्वाद्यभावस्य गौरवग्रस्तत्वं

सम्बन्धप्रकारकभेदान्वयबोधनिर्वाहे राजसंबन्धिनि निरूढलक्षणां स्वीकृत्याभेदान्वयबोधोपगमो निरर्थकः । न च षष्ठीवत्पुरुषादिस्थलेऽपि लुप्तविभक्तिस्मरण एव चेदन्वयबोधस्तदाऽऽद्धस्य राजमातङ्गा इत्यादिप्रयोगापत्तिस्तत्र मातङ्गादौ राजादीनामन्वयबोधोपपत्तये राजादिपदोत्तरषष्ठ्यादिविभक्त्यनुसंधानस्यावश्यकत्वेन समानविभक्तिकतया राजादौ ऋद्धादिपदार्थस्याभेदान्वयबोधसंभवादिति वाच्यम् । यतस्तत्र ऋद्धराजादीनामभेदान्वयबोधानुपपत्त्या नाभियुक्तानामप्रयोगः, अपि तु समासाघटकपदसापेक्षतया राजपदस्यासामर्थ्यातिदेशात्समासासाधुत्वेन । तत्सापेक्षत्वं च तदर्थान्वितस्वार्थपरत्वं,स्वार्थश्च स्वीयवृत्तिग्रहविशेष्यः । अत एव शरैः शातितपत्रोऽयं चैत्रस्य दासभार्येत्यादौ न समस्यमानशातितदासपदादेः सापेक्षता । तदर्थैकदेशशातनदासत्वादावेव शरकरणकत्वचैत्रनिरूपितत्वादीनामन्वयात् । तदर्थान्वितेत्यत्राभेदान्वयो[१] वा निवेशनीय इति । तदसत् । स्वारसिकलक्षणाग्रहस्थलानुरोधेन[२] तादृशसमभिव्याहारज्ञानादेस्तथाविध[३]बोधजनकतायाः क्लृप्तत्वात्तत्र निरूढलक्षणास्वीकारे गौरवाभावात् । यत्र राजपदस्य

---

तत्राधिकपदार्थप्रवेशात् । न च प्रकारतावादिमते कि लाघवं संसर्गतावादिमते तु तदभाववत्तानिश्चयमुद्रायां लघीयानभावः । तत्र तु तदभावव्याप्यत्व-

---

[१]इदन्तु न युक्तम् । पुरुषपुत्रैकदेशपुरुषादौ राजादीनां स्वत्वसम्बन्धेनान्वयतात्पर्ये राज्ञः पुरुषपुत्र इत्यस्य साधुतापत्तेः ।

[२]यत्र राजपदस्य राजसम्बन्धिनि स्वारसिकलक्षणाग्रहस्तत्र तादृशबोधस्योभयवादिसिद्धतयेति पाठभेदः ।

[३]राजसम्बन्ध्यभिन्नपुरुषेत्यधिकः पाठः क्वचित् ।

